# ॥ अथ गृह्यासंग्रहः ॥

( गोभिलीयगृह्यपरिशिष्टविशेषः )

॥ भगवता गोभिलाचार्य्यपुत्रेण प्रणीतः ॥

---

॥ श्रीसत्यव्रतशर्म्मणा प्रकाशितः ॥

CALCUTTA.

Printed by Mohendra Nath Sircar.

16—1, GHOSHER'S LANE, SATYA PRESS.

1891.

## ॥ संक्षिप्तविज्ञापनम् ॥

—o—

अथ वाक्यार्थज्ञानं सुगमयितुम्, छन्दोदोषं निवारयितुम्, ग्रन्थान्तरविरोध मपगमयितुं वा पाठाः संशोधनीया इति धिया नात्र क्वापि कतमोऽप्यंशः परिवर्त्तितः; प्रकृतपाठानां प्रकटनायैव मन्निबन्धसम्पादितस्याप्यस्य पुनरापादनारम्भात्। "संवत् १५९७ वर्षीयचैत्रपौर्णमास्यां भृगुदिने लिखितं", गुरुपरम्परया-लब्धं सुपठित मेव पुस्तक मस्य प्रधानादर्शीकृतञ्चेति शम्॥

॥ श्रीसत्यव्रतशर्म्मा ॥

॥ कलिकाता। संवत् १९४८ ॥

# ॥ अथ गृह्यासंग्रहः ॥

॥ अथ प्रथमप्रपाठकः ॥

॥ ॐ नमः सामवेदाय ॥

ॐ अथातः संप्रवक्ष्यामि यदुक्तं पद्मयोनिना ।
ब्राह्मणानां हितार्थाय संस्कारार्थे तु भाषितम् । १
लौकिकः पावको ह्यग्निः प्रथमः परिकीर्तितः ।
अग्निस्तु मारुतो नाम गर्भाधाने विधीयते । २
पुंसवने चान्द्रमसः शुङ्गाकर्मणि शोभनः ।
सीमन्ते मङ्गलो नाम प्रगल्भो जातकर्मणि । ३
नाम्नि च पार्थिवो ह्यग्निः प्राशने च शुचिस्तथा ।
सभ्यनामाथ चूडे तु व्रतादेशे समुद्भवः । ४
गोदाने सूर्यनामा तु केशान्ते ह्यग्निरुच्यते ।
वैश्वानरो विसर्गे तु विवाहे योजकः स्मृतः । ५
चतुर्थ्यान्तु शिखी नाम धृतिरग्निस्तथापरे ।
आवसथ्ये भवो ज्ञेयो वैश्वदेवे तु पावकः । ६
ब्रह्मा वै गार्हपत्ये स्यादीश्वरो दक्षिणे तथा ।
विष्णुराहवनीये स्यादग्निहोत्रे त्रयोऽग्नयः । ७

लक्षहोमे वह्निर्नाम कोटिहोमे हुताशनः ।
प्रायश्चित्ते विधिश्चैव पाकयज्ञे तु साहसः । ८
देवानां हव्यवाहस्तु पितॄणां कव्यवाहनः ।
पूर्णाहुत्यां मृडो नाम शान्तिके वरदस्तथा । ९
पौष्टिके बलदश्चैव क्रोधाग्निश्चाभिचारके ।
वश्यार्थे कामदो नाम वनदाहे तु दूतकः । १०
कोष्ठे तु जठरो नाम क्रव्यादो मृतभक्षणे ।
समुद्रे वाडवो ज्ञेयः क्षये संवर्त्तको भवेत् । ११
एतेऽग्नयः समाख्याताः श्रावयेद् ब्राह्मणः सदा ।
सप्तविंशतिर्विख्याता ज्ञातव्याश्च द्विजेन तु । १२
सप्त जिह्वाः स्फुरन्त्येता हुताशनमुखे स्थिताः ।
याभिर्हव्यं समश्नन्ति हुतं सम्यग् द्विजोत्तमैः । १३

काली कराली च मनोजवा च
सुलोहिता चैव सुधूम्रवर्णा ।
स्फुलिङ्गिनी चैव शुचिस्मिता च
लेलायमाना इति सप्त जिह्वाः । १४
द्वे शान्तिके द्विगुणा पौष्टिके च ।
तिस्रोऽभिचारिण्यस्ते विश्ववर्णाः । १५

एतास्त्वेता विशेषेण ज्ञातव्यास्तु द्विजेन वै ।
याज्ञुयेव तु होतव्यं योगे यत्र विहितो विधिः । १६

अविदित्वा तु यो ह्यग्निं होमयेदविचक्षणः ।
न हुतं न च संस्कारो न च कर्म्मफलं भवेत् । १७
ज्ञात्वा स्वरूप माग्नेयं योऽग्नेराराधनं चरेत् ।
ऐहिकामुष्मिकैः कामैः सारथिस्तस्य पावकः । १८
निःसंशयकरैरर्थैः पुत्रशिष्यहितैषिणा ।
गोभिलाचार्यपुत्रेण कृतं शास्त्रं सुनिश्चितम् । १९
पावकस्य मुखं वक्ष्ये यदुक्तं पद्मयोनिना ।
सप्तजिह्वाप्रमाणान्तु प्रादेशं परिकीर्त्तितम् । २०
प्रमाणं चतुरस्रञ्च वर्तुलं मुखमण्डलम् ।
यदर्थं हूयते वह्नौ तां जिह्वां परिकल्पयेत् । २१
कराली धूमिनी श्वेता लोहिता चातिलोहिता ।
सुपर्णी पद्मरागी च सप्तैताः परिकीर्त्तिताः । २२
करालीं राक्षसाश्नन्ति धूमिनी मसुरास्तथा ।
श्वेतां नागाः समश्नन्ति पिशाचा लोहितां तथा ।
महालोहितां गन्धर्वाः सुपर्णीञ्च यमस्तथा । २३
पद्मरागी च विख्याता दिव्या जिह्वा हुताशने ।
तस्यान्तु होमयेन्नित्यं सुसमिद्धे हुताशने । २४
विधूमे लेलिहाने च होतव्यं तन्त्रसिद्धये ।
न धूमो न तथा ज्वाला विशुद्धोऽप्यविचक्षुषा । २५
प्रभया भाति यत्रैव भगवांश्चैव तिष्ठति ।

तत्र पूर्णाहुतिं दद्यात्सर्वकामप्रसिद्धये । २६
मारणी राक्षसी रौद्री क्रव्यादी ब्रह्मराक्षसी ।
स्थूलनङ्गा कराली च वज्रहस्ता तथैव च ।
यमदूती च विज्ञेया इत्येताः समिधो नव । २७
विशीर्णा विदला ह्रस्वा वक्रा स्थूला कृशा द्विधा ।
कृमिदष्टा च दीर्घा च वर्जनीयाः प्रयत्नतः । २८
विशीर्णाऽयुःक्षयं कुर्याद् विदला व्याधिसम्भवा ।
ह्रस्वा मृत्युकरी रौद्री दुर्भगत्वन्तु वक्रया । २९
विघ्नानि कुरुते स्थूला कृशा च रिपुवर्द्धिनी ।
द्विधा नाशयते ह्यर्थं भार्यां च प्रियबान्धवान् । ३०
कीटदष्टातिभयदा दीर्घा चैव सुतान् हरेत् ।
तस्मात्सर्वप्रयत्नेन वर्जनीयाश्च वर्जयेत् । ३१
अकृशा चैव न स्थूला अशाखा चापलाशिनी ।
सक्षीरा नाधिका न्यूनाः समिधः सर्वकामदाः । ३२
यज्ञाकर्मसु सर्वेषु होत्रे प्रतिविधिं ध्रुवम् ।
क्रमशः सम्प्रवक्ष्यामि यो यत्र विहितो विधिः । ३३
चतुर्भिन्नपदार्थानि यज्ञावाक्यानि यानि तु ।
तेषां वक्ष्यामि सिध्यर्थं श्लोकैः संग्रहसंज्ञकैः । ३४
पत्नाः पुत्राश्च कन्याश्च जनिष्याश्चापरे सुताः ।
यज्ञा इति समाख्याता यजमानस्य दायकाः । ३५

तेषाᳬ संस्कारयोगेन शान्तिकर्म्मक्रियासु च ।
आचार्यविहितः कल्पस्तस्माद् ग्राह्य इति स्थितिः ।३६
भूमेः समूहनं कृत्वा गोमयेनोपलिप्य च ।
द्रव्याण्युत्तरतः स्थाप्य दर्षौ कुर्यादुदङ्मुखीम् । ३७
गोचर्ममात्रं कुर्वीत चतुरस्रमनूषरे ।
सर्वतोऽरत्निमात्रञ्च स्यात् सायं प्रातस्तु होमयोः । ३८
ऋषभैकशतं यत्र गवां तिष्ठति संवृतम् ।
बालवत्सप्रसूतानां गोचर्म इति तं विदुः । ३९
षट् पञ्च चतुरो वापि त्रयो द्वौ वा शफौ स्मृतौ ।
गोचर्म इति शब्दोऽयं विधियोगे निपात्यते । ४०
प्राग्ग्रीवं ब्रह्मवर्चस्य मुदग्ग्रीवं यशोत्तमम् ।
पित्र्यं दक्षिणतो नीचं प्रतिष्ठालक्षणं समम् । ४१
वरं गान्तु विजानीयाच्चतुर्वर्षामिति स्थितिः ।
दक्षिणानां विशिष्टं वै वरं तमपरं विदुः । ४२
चतुर्मुष्टिर्भवेत् किञ्चित् पुष्कलं च चतुर्गुणम् ।
पुष्कलानि च चत्वारि पूर्णपात्रं विधीयते । ४३
यत्र द्रव्यसमाहारे भोजनाचमने तथा ।
जपे वा होमकाले वा दक्षिणं बाहुमुद्धरेत् । ४४
होमः प्रतिग्रहो दानं भोजनाचमनानि च ।
सर्वाण्येतानि कर्माणि साङ्गुष्ठान्येव माचरेत् । ४५

आरम्भः सर्वहोमानां मान्दुर्यज्ञविदो जनाः ।
लक्षणं तत्प्रवक्ष्यामि प्रमाणं दैवतं च यत् । ४६
न नखेन न काष्ठेन नाश्मना मृण्मयेन वा ।
प्रोल्लिखेल्लक्षणं विप्रः सिद्धिकामस्तु यो भवेत् । ४७
नखेन कुनखी चैव काष्ठेन व्याधि मिच्छति ।
अश्मना धननाशः स्यान् मृन्मयेन कलिर्ध्रुवम् । ४८
फलेन फलिनी चैव पुष्पेण श्रिय मिच्छति ।
पर्णेन धनलाभः स्याद्दीर्घ मायुः कुशेन तु । ४९
तस्मात् फलेन पुष्पेण पर्णेनाथ कुशेन वा ।
प्रोल्लिखेल्लक्षणं विप्रः सिद्धिकामस्तु कर्मसु । ५०
सव्यं भूमौ प्रतिष्ठाप्य प्रोल्लिखेद्दक्षिणेन तु ।
तावन्नोत्थापयेत्पाणिं यावदग्निं निधापयेत् । ५१
प्राक्कृता पार्थिवी लेखा आग्नेयी चाप्युदक् स्मृता ।
प्राजापत्या च ऐन्द्री च सौमी च प्राक्कृता स्मृता । ५२
उत्करं गृह्य रेखाभ्योऽरत्निमात्रे निधापयेत् ।
द्वार मेवन्तु द्रव्याणां प्रागुदीच्यां दिशि स्मृतम् । ५३
पार्थिवी चैव सौमी च लेखे द्वे द्वादशाङ्गुले ।
एकविंशतिराग्नेयी प्रादेशिन्ये उभे स्मृते । ५४
षडङ्गुलान्तराः कार्या आग्नेयी संहितास्तु याः ।
पार्थिवायास्तु लेखायास्तिस्रस्ता उत्तरोत्तराः । ५५

शुक्लवर्णा पार्थिवी स्यादाग्नेयी लेखिता भवेत् ।
प्राजापत्या भवेत् कृष्णा नीला मैन्द्रीं विनिर्दिशेत् ।
पीतवर्णा च सौमी स्यादेखानां वर्णलक्षणम् । ५६
एष लेखविधिः प्रोक्तो गृह्याकर्मसु सर्वसु ।
सूक्ष्मास्ता ऋजवः कार्या लेखास्ताः सुसमाहिताः ।५७
एतानि तत्त्वतो ज्ञात्वा गृह्याकर्माणि कारयेत् । ५८
विष्णुपादपरिक्रान्ता वाराहेणोद्धृता च या ।
शुचिर्मेध्या च पूता च किमर्थ मुपलिख्यते । ५९
इन्द्रेण वज्राभिहतः पुरा वृत्रो महासुरः ।
मेदसा तस्य संक्लिन्ना तदर्थं मुपलिख्यते । ६०
मेदो मुद्रियमाणस्य शेषं यत्किञ्च तिष्ठति ।
अन्तर्धानं मृदा चैव दीयते वेदनिश्चयः । ६१
द्यूते च व्यवहारे च प्रवृत्ते यज्ञकर्मणि ।
यानि पश्यत्युदासीनः कर्ता तानि न पश्यति । ६२
एकः कर्मनियुक्तः स्याद् द्वितीयस्तन्त्रधारकः ।
तृतीयः प्रश्नं प्रब्रूयात्ततः कर्म समाचरेत् । ६३
कपालैर्भिन्नपात्रैर्वा न ताम्रैर्गोमयेन च ।
अग्निप्रणयनं कार्यं यजमानभयावहम् । ६४
अल्पः प्रणीतो विच्छिन्नोऽसमिद्धश्चापरिस्रुतः ।
त्वरया पुनरानीतो यजमानभयावहः । ६५

तस्माच्छुभेन पात्रेण ग्रविच्छिन्नाक्रमं बहु ।
अग्निप्रणयनं कुर्याद् यजमानसुखावहम् । ६६
शुभं पात्रं तु कर्त्तव्यं यजमानसुखावहम् । ६७
शुभं पात्रं तु कांस्यं स्यात्तेनाग्निं प्रणयेद्बुधः ।
तस्याभावे शरावेण नवेनाभिमुखस्तु तम् । ६८
सर्वतः पाणिपादान्तः सर्वतोक्षिशिरोमुखः ।
विश्वरूपो महानग्निः प्रणीतः सर्वकर्मसु ॥ ६९
(प्रोक्षणाभ्युक्षणाभ्याञ्च लक्षणोल्लिखनेन वा ।
प्रणीताग्निः प्रकर्त्तव्यो त्रिधिवद्याज्ञिको भवेत् । )
न वस्त्रेण धमेदग्निं न शूर्पेण न पाणिना ।
मुखेनोपधमेदग्निं मुखाध्येषोऽध्यजायत । ७०
वस्त्रेण तु भवेद् व्याधिः शूर्पेण धननाशनम् ।
पाणिना मृत्युमाप्नोति मुखेन सिद्धिभाग्भवेत् । ७१
उदितेऽनुदिते चैव समयाध्युषिते तथा ।
सर्वथा वर्त्तते यज्ञ इतीयं वैदिकी श्रुतिः । ७२
रात्रेः षोडशमे भागे ग्रहनक्षत्रभूषिते ।
अनुदयं विजानीयाद्धोमं तत्र प्रकल्पयेत् ॥ ७३
ततः प्रभातसमये नष्टे नक्षत्रमण्डले ।
रविविम्बं न दृश्येत समयाध्युषितं स्मृतम् । ७४
रेखामात्रन्तु दृश्येत रश्मिभिश्च समन्वितम् ।

अन्त्या समिद्विघाश्च विभागः परमेष्ठिनः । ७६
परमेष्ठी विभक्तांश्च जुहुयाद्वैवतान् सकृत् ।
प्रातःसूर्यौ घृतं वापि प्रातराहुत्युपक्रमः । ७७
आश्वत्थीन्तु शमीगर्भा मरणिं कुर्वीत सोत्तराम् ।
उरोदीर्घां रत्निदीर्घां चतुर्विंशाङ्गुलां तथा ।
चतुरङ्गुलोच्छ्रितां कुर्य्यात् पृथुत्वेन षडङ्गुलाम् । ७८
अष्टाङ्गुलः प्रमन्थः स्याच्चात्रं स्यात् द्वादशाङ्गुलम् ।
ओविली द्वादशैव स्यादेतन्मन्थनयन्त्रकम् । ७९
मूलादष्टाङ्गुल मुत्सृज्य त्रीणि त्रीणि च पार्श्वयोः ।
देवयोनिः स विज्ञेयस्तत्र मथ्यो हुताशनः । ८०
मूलादष्टाङ्गुलं त्यक्त्वा अग्रन्तु द्वादशाङ्गुलम् ।
देवयोनिः स विज्ञेयस्तत्र मथ्यो हुताशनः । ८१
खादिरोऽरत्निदीर्घः स्यात् स्रुवोऽङ्गुष्ठपर्वखातः ।
पाणी स्रुचं बाहुमात्रौ पाणितलाकारपुष्करां । ८२
त्वग्विलां त्वग्रं कुर्वीत मेखलं ... कसुवाहिवत् ।
... द्वादशाङ्गुल उच्यते । ८३
नवैः ... परिधिन्तु ... ।
ललाटांशिमुकं प्राहुर्बाहुमात्रा: परिधयः । ८४
... ।
न च संस्कार... पञ्चकर्माणि: । ८५

लेखनाभ्युक्षणे कृत्वा निहितेऽग्नौ समिद्धयेत् ।
ततो भूमिग्रहं कृत्वा कुर्य्यात् परिसमूहनम् । ८६
ब्रह्माण मुपसङ्कल्प्य चरुश्रपणा मारभेत् ।
ब्रह्माणः स्तरणं कुर्याच्चरुर्यत्र न कल्पितः । ८७
ब्रह्मविष्टरयोश्चापि सन्देहे समुपस्थिते ।
ऊर्द्ध्वकेशो भवेद्ब्रह्मा लम्बकेशस्तु विष्टरः । ८८
कतिभिस्तु कुशैर्ब्रह्मा कतिभिर्विष्टरः स्मृतः ।
पञ्चाशद्भिः कुशैर्ब्रह्मा तदर्द्धेन तु विष्टरः । ८९
उदकधारा मविच्छिन्ना मग्नि मारभ्य दक्षिणाम् ।
दद्याद्ब्रह्मासनस्थाने सर्वकर्म्मसु नित्यशः । ९०
एकाग्नौ पितृयज्ञे च ब्रह्माणं नोपकल्पयेत् ।
सायं प्रातश्च होमेषु तथैव बलिकर्म्मसु । ९१
यवव्रीह्यकृतं ज्ञेयं तण्डुलादि कृताकृतम् ।
ओदनन्तु कृतं विद्यात् न तस्य करणं पुनः । ९२
सीमन्ते दर्भपिञ्जूल्यस्तिस्रस्ताभिस्त्रिरुन्नयेत् ।
त्रिभिः श्वेतैश्च शललैः प्रोक्तो वीरतरः शरः । ९३
दिशश्च विदिशाश्चैव यत्र नोक्ता विचारणा ।
"सर्वतः" तत्र शब्दोऽयं विधियोगे निपात्यते । ९४
विहितपूर्त्तालिङ्गाश्च यश्चैतां नोपकल्पयेत् ।
वैरूपाक्षं जपेन्मन्त्रं प्रपदञ्चैव यज्ञवित् । ९५

परिधीᳬस्तु न कुर्वीत गृह्याकर्मसु याज्ञिकः ।
उदकाञ्जलयस्तिस्रस्ते वै परिधयः स्मृताः ॥ ९६
सर्वेषा मेव होमानाᳬ समिदादौ विधीयते ।
कर्मान्ते चैव मेव स्यात् स्वाहां तत न कारयेत् ॥ ९७
इध्म मष्टादश दारु प्रवदन्ति विचक्षणाः ।
दर्शे च पौर्णमासे च क्रियास्वन्यासु विंशतिः । ९८
प्रादेशमात्रं कुर्वीत मेक्षणᳬ समिधस्तथा ।
इध्मः समानवृक्षाणां द्विप्रादेशप्रमाणतः । ९९
प्रागग्राः समिधो देयास्ताश्च कार्य्या ह्यपाटिताः ।
शान्त्यर्थेषु सशक्ताऽर्द्रा विपरीता जिघांसति । १००
इध्मः सन्नहनादानं चरुश्रपण मेव च ।
तूष्णी मेतानि कुर्वीत समस्तञ्च ध्म माददेद् । १०१
आचार्य्यानुमतं वाक्य मेकीयं गृह्यते क्वचित ।
शेषाण्येकीयवाक्यानि आचार्य्यो न प्रशंसति । १०२
द्रव्याणा मुपक्लृप्तानाᳬ होमीयामां यथाविधि ।
प्रसिञ्चेन्मेक्षणं कुर्य्यादग्निरभ्युक्षण मेव च । १०३
पवित्र मन्तरे कृत्वा स्थाल्यां माज्यᳬ समावपेत ।
एतत् सम्पूयनं नाम पश्चादुत्पवनं स्मृतम् । १०४
अग्निना चैव मन्त्रेण पवित्रेण च त्रुक्षणा ।
चतुर्भिरेव यत् पूतं तदाज्यं मितरद्हृतम् । १०५

घृतं वा यदि वा तैलं पयो वा दधि यावकम्।
आज्यस्थाने नियुक्तानामाज्यशब्दो विधीयते । १०६
आज्यानाꣳ सर्पिरादीनाꣳ संस्कारे विधिचोदिते ।
अनधिश्रयणं दध्नः शेषाणाꣳ श्रयणं स्मृतम् । १०७
यथा सीमन्तिका नारी पूर्वगर्भेण संस्कृता ।
एव माज्यस्य संस्कारः संस्कारे विधिनोदिते । १०८
आज्यस्य हविषां चैव आज्ये पूर्वक्रियाविधिः ।
तस्य सम्पवनं पूर्वं चरोः पर्य्युक्षणं परम् । १०९
पाणिना मेक्षणेनाथ स्रुवेणैव तु यद्धविः ।
हूयते चानुपस्तीर्य्य उपघातः स उच्यते । ११०
यदुपघातं जुहुयाच्चरावाज्यꣳ समावपेत् ।
मेक्षणेन तु होतव्यं नाज्यभागौ न स्विष्टकृत् । १११
हुत्वाज्यं परिशेषेण यद् द्रव्य मुपकल्पितम् ।
स्रुवेणैव तु तत् स्पृष्टं सम्पातं चैव तं विदुः । ११२
स्थालीपाकाव्रतान्यत्तु यत्र संज्ञा निपात्यते ।
तत्राज्यभागौ हुत्वैव स्रुच मास्तीर्य्यावद्यति । ११३ ।

इति गोभिलाचार्यपुत्रप्रणीते गृह्यासङ्ग्रहे
प्रथमः प्रपाठकः समाप्तः ॥

॥ अथ द्वितीयप्रपाठकः ॥



सूतकेभ्यो न प्रच्छिन्द्यात् यातयामं स्मृतं सूतम् ।
सूतकशेषात्ततो गृह्य यज्ञवास्तुक्रिया तथा ॥ १
यज्ञवास्तुक्रियां कृत्वा विधिदृष्टेन कर्मणा ।
आज्यधारामविच्छिन्नां जुहुयात् सार्वकामिकीम् । २
सायंप्रातर्वैश्वदेवे पितृधर्मे तथैव च ।
कम्बुके गोमये नित्यं व्रतानां समिधासु च । ३
चैत्ये यूपे व्रीहियवे भूमावप्सु च याज्ञिकैः ।
व्याहृतीर्न प्रयोक्तव्या यज्ञवास्तुक्रियां तथा । ४
चरवे यो विधिः प्रोक्तः स यज्ञ इति निश्चयः ।
बलिं तेभ्यो न कुर्वीतापसिद्धार्थबलीन् हरेत् । ५
यत्र मन्त्रा न विद्यन्ते व्याहृतीस्तत्र योजयेत् ।
मन्त्राणामेव चादेशे मन्त्रात् कर्म समाचरेत् । ६
भूरादयो व्याहृतयो वेदेभ्यो निःसृताः पुरा ।
महत्त्वं व्याहृतित्वञ्च प्राप्ताः स्वेनैव कर्मणा । ७
ॐकारजननात्तासां महत्त्वं परिभाष्यते ।
व्याहृत्या व्याहृतित्वञ्च तेन नैविद्यतां ययुः । ८
ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।

काण्ठं भित्वा विनिर्यातौ तेनैतौ मङ्गलावुभौ । ९
अथैताः स्वग्याहृतयोग्यवीयस्यः पराः स्मृताः ।
ऐन्द्रावत: प्रतिचैत्र वेदान्तेष्वाश्रितास्तु याः । १०
मध्ये स्थण्डिल मन्त्रे च वारिणा परिसंवृतम् ।
अविदासिनए क्रदं विद्यात्ताहृशं कर्मणा विदुः । ११
यत् विद्या च वित्तञ्च सत्वं धर्मः शमो दमः ।
अभिरूपः स विज्ञेयः स्वाश्रमे यो व्यवस्थितः । १२
लौकिके लोकसामान्ये क्रव्यादाग्नौ वृथा हुतम् ।
धार्मिकं पुण्य मायुष्यं कर्मणा नोपपद्यते । १३
वैदिके लौकिके वाऽपि यज्ञ होति प्रयत्नतः ।
वैदिके ब्रह्मलोकः स्यात् लौकिके पापनाशनम् । १४
स्ववर्णाभिरनिन्द्याभिरद्भिरक्षतमिश्रितैः ।
स्नानं चतुर्भिः कलशैः स्त्रीभिः स्त्रीं यत्र प्लावनम् । १५
गौड़ी पैष्टी च माध्वी च विज्ञेयास्त्रिविधाः सुरा ।
पाणिकर्मणि गौड़ी स्यात्सत्या माध्वधमा सुरा । १६
नग्निकान्तु वदेत् कन्यां यावन्नर्तुमती भवेत् ।
ऋतुमती त्वनग्निका तां प्रयच्छेत्वनग्निकाम् । १७
अप्राप्ता रजसा गौरी प्राप्ते रजसि रोहिणी ।
अव्यञ्जिता भवेत् कन्या कुचहीना तु नग्निका । १८
व्यञ्जनैस्तु समुत्पन्नैः सोमो भुञ्जीत कन्यकाम् ।

पयोधरैस्तु गन्धर्व्वा रजसाग्निः प्रकीर्त्तितः । १९
तस्मादव्यञ्जनोपेता मरजा मपयोधराम् ।
अभुक्ताञ्चैव सोमाद्यैः कन्यकान्तु प्रशस्यते । २०
वेदिपिण्डात् क्रियावती सीतायाः फलते कृषिः ।
अक्षोभ्या च ह्रदे ज्ञेया गोष्ठे भवति गोमती । २१
चतुष्पथे प्रकीर्णा स्यात् द्यूतस्थाने कलिप्रिया ।
श्मशाने म्रियते भर्त्ता वन्ध्या भवति चोषरे । २२
नवमे सर्व एवैते कन्यायाः परिगृह्यन्ते ।
पाणिग्रहणमन्त्रास्तु नियतं दारलक्षणम् । २३
विवाहे यो विधिः प्रोक्तो मन्त्रा दाम्पत्यवाचकाः ।
वरस्तु तान् जपेत् सर्वान् क्षत्रियराजन्यवैश्ययोः । २४
महानदीषु या आपः कौप्यान्याश्च ह्रदेषु च ।
गन्धवर्णरसैर्युक्ता भवास्ता इति निश्चयः । २५
गन्धमाल्यैरलङ्कृत्य सकुम्भो वाग्यतः शुचिः ।
धारयेत् त्रिषु वर्णेषु प्राङ्गतासेन द्विजोत्तमः । २६
यदा निष्क्रामयेत्कन्यां वरः पाणिं जिघृक्षयन् ।
अग्निप्रदक्षिणं कृत्वा कटस्तीर्णं पदं व्रजेत् । २७
पदा प्रपद्य पन्थानं पतियानं संश्रयेद्वधूः ।
वरो वाऽऽच जपेन्मन्त्रं मांकार्डान्तादिति स्थितिः । २८
लाजानाञ्जलिं सर्वं कुम्भं प्राणनोभ्यान मेव च ।

प्रदक्षिणानि कुर्वीत दम्पती तु विना यशी । २९
प्राजग्राग्ह मुदयाहं ब्रह्माणं मृत्विजं तथा ।
एतानि वाग्यतः कृत्वा शेषाणान्तु प्रदक्षिणम् । ३०
दक्षिणां दिश मास्थाय यमो मृत्युश्च तिष्ठतः ।
तयोस्तु रक्षणार्थाय तस्माद् ब्रह्मा वहिर्भवेत । ३१
सोमः प्रकृतिरेखा हि लाजानाश्रित्य तिष्ठति ।
विरुद्ध माज्यं सोमेन नाभिघारण मर्हति । ३२
शमीपलाशमिश्राणां लाजानां मभिघारणम् ।
पूर्वाणां घृतमिश्राणां माचार्यैः कल्पित यथा । ३३
तथा लाजाञ्जलिर्बध्वा हूयतेऽङ्गुलिपर्वभिः ।
एवं लाजहविःशेषं होतव्यं शूर्पकोणया । ३४
अवसितान्तु विधिना पाणिग्राहस्तु माजनी ।
रक्षार्थ मनुगच्छेत समाहं त्र्याह मेव वा । ३५
ब्राह्मस्यार्षस्य दैवस्य प्राजापत्यस्य याज्ञिकैः ।
पूर्वं होमविधिः प्रोक्तः पश्चात् परिणयः स्मृतः ।३६
गान्धर्वासुरपैशाचा विवाहा राक्षसाश्च ये ।
तेषां परिणयः पूर्वं पश्चाद्धोमो विधीयते । ३७
उद्वर्त्तनं नखच्छेदो रोमच्छेदन मेव च ।
स्रंसनं मेखलायाश्च कौसुमानि विदुर्बुधाः । ३८
चूडाकर्मणि कौमारे ग्रंथ्याभ्यां सहा रूपे ।

विवाहे चैव लाजानां नोक्तो निर्वपणो विधिः । ३९
दक्षिणाकपर्द्दी वासिष्ठा आत्रेयास्त्रिकपर्द्दिनः ।
आङ्गिरसः पञ्चचूड़ा मुण्डा भृगवः शिखिनोऽन्ये । ४०
सर्वयज्ञेषु विप्राणां मग्निः पूर्वं प्रवर्त्तते ।
तस्मात् सुरोत्तमा आपोऽग्निरेवाभिषेचयेत् । ४१
ब्रह्मचारी व्रतादेशे व्रतनाम प्रवाचयेत् ।
चरिष्ये यावदन्ताय सावित्रे चान्तकीर्त्तनम् । ४२
समा मासा महोरात्रांस्तुल्या ब्राह्मणचोदिताः ।
सावित्र मष्टभिर्वर्षैः कार्य्यं मासैर्दिनैश्च वा । ४३
सावित्रं यावदन्ताय धार्य्यं सर्वाश्रमस्थितैः ।
चूड़ाकरणधर्मेण गोदाने चास्य वापनम् । ४४
विप्राणा मग्निराचार्य्य इन्द्रस्त्राता व्रते व्रते ।
तस्मात् सर्वव्रतान्तेषु चरुरैन्द्रो विधीयते । ४५
अजिनं सर्वदैवत्य मैन्द्रो दण्ड इति स्मृतः ।
सावित्रीं मेखला माहुस्तस्मात् सर्व्वाणि धारयेत् । ४६
मेखला मजिनं दण्ड मुपवीतं कमण्डलुम् ।
अप्सु प्रास्य विनष्टानि गृह्णीतान्यानि मन्त्रतः । ४७
यज्ञोपवीतं कुर्वीत सूत्रेण नवतान्तवम् ।
देवतास्तत्र वक्ष्यामि आनुपूर्व्येण याः स्मृताः । ४८
ओँकारः प्रथमस्तन्तुर्द्वितीयश्चाग्निदैवतः ।

तृतीयो नागदैवत्यश्चतुर्थः सोमदैवतः। ४९

पञ्चमः पितृदैवत्यः षष्ठश्चैव प्रजापतिः।

सप्तमो वासुदैवत्योऽष्टमो यमदैवतः। ५०

नवमः सर्वदैवत्य इत्येते नव तन्तवः।

द्विगुणं त्रिगुणं वापि एकग्रन्थिकृतं विदुः। ५१

केनैवोत्पादितं सूत्रम् केन वा त्रिगुणीकृतम्।

केन वास्य कृतो ग्रन्थिः केन मन्त्रेण मन्त्रितम्। ५२

ब्रह्मणोत्पादितं सूत्रं विष्णुना त्रिगुणीकृतम्।

रुद्रेण तु कृतो ग्रन्थिः सावित्र्या चाभिमन्त्रितम्। ५३

स्तनादूर्ध्वमधो नाभेर्न कर्त्तव्यं कथञ्चन।

स्तनादूर्ध्वं श्रियं हन्ति नाभ्यधस्तात्तपःक्षयः। ५४

गोभिर्वालपवित्रेण धार्य्यमाणेन नित्यशः।

न स्पृशन्तीह पापानि श्रियं गात्रेषु तिष्ठति। ५५

गोभिर्वालपवित्रेण यस्तु सन्ध्या मुपासते।

गोधर्मेष्वेव वर्त्तन्ते न स पापेन लिप्यते। ५६

गोभिर्वालपवित्रेण यस्त्वग्नि मुपासते।

पञ्चाग्नयो हुतास्तेन यावज्जीवं न संशयः। ५७

आचार्य्येणाभ्यनुज्ञात आचार्य्याग्नौ विधिर्यथा।

प्रणीतेऽग्नौ समिद्धत्याहुरेतां सा ब्रह्मचारिणाम्। ५८

दधि सर्पिश्च संयुक्तः प्राश्नीत्त्वेष पृषातकः।

होमकाले तु तस्याग्नेः स्थान मुत्तरपूर्वतः । ५९
कामगा प्रियो च हव्या च इड़ा रन्ता सरस्वती ।
मही विश्रुता चाघ्नगा च गोनामानि विदुर्बुधाः । ६०
मधुपर्कं पिबेन्मन्त्री मन्त्रतो हृदयं स्पृशेत् ।
अपूपानां चरोश्चापि सर्वस्थानां न्यनक्ति च । ६१
दध्यक्षतसुमनस आपश्चेति चतुष्टयम् ।
अर्घ्य एष प्रदातव्यो गृह्ये ये अर्घ्यार्हाः स्मृताः । ६२
दध्यक्षतसुमनसो घृतं सिद्धार्थका यवाः ।
पानीयश्चैव दर्भाश्च अष्टाङ्गो ह्यर्घ्य उच्यते । ६३
सर्पिषा मधुना दध्ना अर्च्चयेदर्हयन् सदा ।
ऋषिप्रोक्तेन विधिना मधुपर्केण याज्ञिकः । ६४
कांसे निनय मासिच्य कांसेन परिसंवृतम् ।
परिश्रितेषु देयः स्यान्मधुपर्क इति ध्रुवम् । ६५
मधुपर्के तथा सोमे अप्सु प्राणाहुतीषु च ।
अनुच्छिष्टो भवेद्विप्रो यथा वेदविदो विदुः । ६६
प्राणाहुतिषु सोमेषु मधुपर्के तथैव च ।
आस्यहोमेषु सर्वेषु नोच्छिष्टो भवति द्विजः । ६७

दधनि पयसि वा कृतान्ने
मधु दद्यान्मधुपर्क मेव माहुः ।
दधिमधूदके वापि सक्त-
विनीते विहितास्त्रयस्तु मन्थाः । ६८

पवित्रान्तर्हितं कृत्वा चरुं प्राज्ञोभिघारयेत् ।
उद्वास्य चैवं विधिना एवं तन्त्रं न लुप्यते । ६९
चतुर्मुष्टिश्चरुः कार्य्यश्चतुर्णां मुत्तरोऽपि वा ।
कपालस्य प्रमाणेन अपूपानष्टकाविधौ । ७०
चतुर्भागं पाणितलात् कपालं याज्ञिका विदुः ।
पृथक्कपालान् कुर्वीत अपूपानष्टकाविधौ । ७१
वपाहोमे मुखे चैव होमे स्विष्टकृते तथा ।
व्याहृतीर्न प्रयोक्तव्या मुखे भास्तु च लक्षणम् । ७२
सकृतः प्रणवः कार्य्यः प्रत्यग्रेषु ब्राह्मणैः ।
उपांशुकरणञ्चापि सह कर्त्रा समस्वरैः । ७३
कालातीतेषु होमेषु उत्तरेष्वागतेषु च ।
कालातीतानि हुत्वैव उत्तराणि समारभेत् । ७४
यान्यतीतान्यतिक्रम्य उत्तराणि समारभेत् ।
न देवाः पितरस्तस्य प्रतिगृह्णन्ति तद्धविः । ७५
प्रक्रमणे तथोद्वाहे होमे स्विष्टकृते तथा ।
यस्यां दिशि विधिं प्राहुस्तां प्राहुरपराजिताम् । ७६
अयुक्तं मन्त्रलवणैरपर्य्युषित मेव च ।
हविष्य मेतदन्नाद्य मधुरैश्चाप्यसंयुतम् । ७७
इक्षवः सर्वखल्वाश्च कोद्रवा वरटैः सह ।
अकृताग्रयणे भक्ष्या येषां नोक्ता हविर्गुणाः । ७८

नवयज्ञेऽधिकारस्थाः श्यामाका व्रीहयो यवाः ।
नाश्नीयान्न च हुत्वैव मन्त्रेष्वनियमः स्मृतः । ७९
श्राद्धे ब्राह्मण एकश्चेत् स्वल्पञ्च प्रकृतं यदि ।
वैश्वदेवं कथं तत्र इति मे संशयो महान् । ८०
प्रणीतान्नाद्य मुद्धृत्य सर्वस्य प्रकृतस्य तु ।
ब्राह्मणाय प्रदातव्य मेवं भवति सम्पदे । ८१
यद्येकं भोजयेच्छ्राद्धे छन्दोगं तत्र भोजयेत् ।
ऋचो यजूंषि सामानि त्रैविध्यं तत्र तिष्ठति । ८२
ऋग्भिस्तु पितरः प्रीता यजुर्भिस्तु पितामहाः ।
सामभिः प्रपितामहास्तस्मात्तं तत्र भोजयेत् । ८३
अटेत पृथिवीं कृत्स्नां सशैलवनकाननाम् ।
लभेत यदि पित्रर्थे साम्ना मन्त्ररचिन्तकम् । ८४
दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणाश्च विशेषतः ।
नैते निर्माल्यतां यान्ति नियोक्तव्यास्तु पुनः पुनः । ८५
दर्भाः पिण्डेषु निर्माल्या विप्राः प्रेतान्नभोजने ।
मन्त्राः शूद्रेषु निर्माल्यानिर्माल्याश्चितिपावकाः । ८६
पिण्डार्थं ये स्तृता दर्भास्तर्पणान्तु कृतन्तु यैः ।
धृतैः कृते च विण्मुत्रे त्यागस्तेषां विधीयते । ८७
उरसि पितरो भुङ्क्ते वामपार्श्वे पितामहाः ।
प्रपितामहा दक्षिणतः पृष्ठतः पिण्डतर्षुकाः । ८८

क्षुते निष्ठीवने चैव दन्तोच्छिष्टे तथानृते ।
पतितानाञ्च सम्भाषे दक्षिणं श्रवणं स्पृशेत् । ८९
मरुतः सोम इन्द्राग्नी मित्रावरुणौ तथैव च ।
एते सर्वे च विप्रस्य श्रोत्रे तिष्ठन्ति दक्षिणे । ९०
आत्मतन्त्रेषु यन्नोक्तं तत् कुर्य्यात् पारतन्त्रिकम् ।
विशेषाः खलु सामान्या ये चोक्ता वेदवादिभिः । ९१
ऊनो वाप्यतिरिक्तो वा यः स्वशाखोक्त माचरेत् ।
तेन सन्तनुयाद् यज्ञं न कुर्य्यात् पारतन्त्रिकम् । ९२
यः स्वशाखोक्त मुत्सृज्य परशाखोक्त माचरेत् ।
अप्रमाण मृषिं कृत्वा सोऽन्धे तमसि मज्जति । ९३
पुनरुक्त मतिक्रान्तं यच्च मिश्रावलोकितम् ।
गोभिले ये न गृह्णन्ति न ते ज्ञास्यन्ति गोभिलम् । ९४
गोभिलाचार्य्यपुत्रस्य योऽधीते संग्रहं बुमान् ।
सर्वकर्म्मसुसंमूढः प्राप्नोति सिद्धि मवाप्नुयात् । ९५ ।

इति श्रीगोभिलाचार्यपुत्रप्रणीते गृह्यासङ्ग्रहे
द्वितीयः प्रपाठकः समाप्तः ॥

॥ समाप्तश्चायं गृह्यासंग्रहः ॥

---

# ॥ मन्त्रब्राह्मणम् ॥

( सामवेदीयम् )

आवसथ्यान्वयश्रीसत्यव्रतसामश्रमिशर्म्मकृतया

"मन्त्रसञ्जीवनी" नामटीकया

वङ्गानूद्या च सहितम् ।

---

শ্রীসত্যব্রত সামশ্রমী শর্ম্মার কৃত

"মন্ত্রসঞ্জীবনী" নামক টীকা

এবং

বঙ্গানুবাদের সহিত।

---

CALCUTTA.

16—1, GHOSHE'S LANE, SATYA PRESS.

Printed by Priya Vrata Bhattacharjya.

॥ संवत् १९४७ ॥

## ॥ मन्त्रब्राह्मणटीकाभूमिका ॥

ध्यायं ध्यायं विश्वरूपं स्मारं स्मारं गुरोर्गिरः ।
मन्त्रसञ्जीवनीं वष्टे श्रीसत्यव्रतः सामगः ॥ १

“अथैतद् मन्त्र नाम ब्राह्मण प्रपाठकद्वयात्मक खलु सामवेदीयम् । कौथुमानां गृह्येऽग्नौ यावन्ति कर्माणि विहितानि, तेषु प्रयोक्तव्यानां प्रायः सर्वेषा मेव मन्त्राणा मेष ग्रन्थो मञ्जूषेव । अहो चित्र मेतत् –यदेतादृशबहुप्रयोजनीयस्यापि ग्रन्थस्य नैकं पुस्तक मपि दृष्टं मयात्र विस्तृते वङ्गे ! अन्यत्राप्यस्य विरलप्रचार एव । विशुद्धो व्याख्यानग्रन्थश्चास्य कश्चिन्नाद्यापि प्रकाशित उपलभ्यते । तदेतत् सर्वं मालोच्यात्र पुस्तकबाहुल्यसिद्धये बोधसौकर्यापादनाय चेदं देवगिरा वङ्गभाषयापि यथामति व्याचक्षाणः समीक्ष्य प्रकाशयामि । हन्त ! पूर्वं युगाङ्कसिन्धिन्दुमितशाकाऽरम्भेऽपीत्थ मेव प्रकटित मेतन्मयैव ; परं तद्धि गुणविष्णुभट्टादिमतानुसृतव्याख्यानयुत मिति सम्पन्नं भ्रमपूर्णं मतोऽभूदस्मापायैत्यतस्तदनुतापनिवृत्तयेऽयमेष यत्नो द्वितीयः ।

ब्राह्मणञ्चैतत् सर्ववेदभाष्यकारस्य भगवतः सायणाचार्यस्य नये कौथुमशाखीयेषु षष्ठम् । तथाहि तत्कृतायां प्रौढब्राह्मणभाष्यभूमिकायाम्—“अष्टौ हि ब्राह्मणग्रन्थाः प्रौढं ब्राह्मण मादि-

मम्। षड्विंशाख्यं द्वितीयं स्यात् ततः सामविधिर्भवेत्। आर्षेयं दैवतं चैव मन्त्रं वोपनिषत्ततः। सामैतोपनिषद् वंशो ग्रन्था अष्टावितीरिताः॥"—इति। अस्मन्मते तु प्रतिशाख मेकैक मेव ब्राह्मणम्; तथा च, यथा शाकलाना मैतरेयम्, वाजसनेयिनां शतपथम्, तैत्तिरीयाणां तैत्तिरीयकम्, शौनकिनां गोपथम्, तथैव कौथुमानां ताण्ड्य मित्येक मेव; किञ्च यथा शतपथं नाम ब्राह्मण मस्ति चत्वारिंशदध्यायात्मकम्, सामवेदीयेनानेनापि तथैव भवितव्यम्। तथाच यदुक्तं षड्विंशाख्यं द्वितीय मिति, तत्तु तस्यैव प्रौढस्य षड्विंशाद्यध्यायपञ्चकमात्रम्; न तु ब्राह्मणान्तरम्। तदेवं कौथुमशाखीयब्राह्मणस्य श्रौतकर्मविधायक स्त्रिंशदध्यायात्मक आद्यो भागः प्रौढ मिति प्रसिद्धः स्वीकार्यः। यच्चोक्तं पृथक्त्वेन मन्त्रं वोपनिषदिति, तत्तु सामगप्रसिद्धिविरुद्ध मेव; न हि कोऽपि सामगो मन्त्रं व्यवहरति उपनिषदिति, नाप्युपनिषदं मन्त्र मिति। वस्तुत एकस्यैव कौथुमब्राह्मणस्य द्वितीयो भागः सम्पन्नो गम्यते मन्त्रोपनिषदोर्मेलनेन; तत्राद्याध्यायद्वयात्मकं मन्त्रम्, तृतीयाद्यध्यायाष्टकन्तूपनिषदिति प्रसिद्ध सामगेषु। तथाचैष गृह्यमन्त्रोपनिषन्मयोऽन्त्यभागो ब्राह्मणस्य तस्य सम्पन्नो दशाध्यायात्मकः। इत्थं श्रौतगृह्ययोरुभयोरध्याया्नां सङ्कलनया चत्वारिंशदध्यायात्मकं कौथुमब्राह्मणं सम्पद्यते यथावत्। दृश्यते चैव मैतरेयस्य ब्राह्मणस्याद्यो भागः श्रौतविधिपूर्णः; द्वितीये तु प्रथमं गृह्यमन्त्राः समाम्नाताः तदुत्तर मुपनिषच्चेति। दृश्यते चैवं शतपथस्यापि ब्राह्मणस्याद्यो भागः श्रौतविधिपूर्णः; द्वितीयस्त्वन्यविध एवेति। दृश्यते चैवं तैत्तिरीयस्यापि ब्राह्मणस्याद्यो भागः श्रौतविधिपूर्णः; द्वितीये तु गृह्यमन्त्रा उपनिषच्चेति।

आथर्वणिकाना मध्ये व मेव भवितव्यम्; गोपथ मिति मुद्रितस्य-वस्य मसमग्र मेवेति मन्यामहे। 'ताण्डि'-नाम्ना महर्षिणा प्रकाशितं रचितं वैतत् सर्वं मतएवेतत् ताण्ड्य मिति व्यपदिश्यते; छान्दोग्य-मिति समाख्या त्वस्य सिद्धैव, सामवेदीयानां छन्दोगत्वप्रसिद्धेः। तदित्थं ताण्डीयतिख्यातस्य ब्राह्मणस्यैव द्वितीय-भागीयाद्याध्यायद्वयात्मकं यत् प्रसिद्धं मन्त्रब्राह्मण मिति तदेवैतत् सञ्जीवयितु मेष प्रबन्धः।

एव मङ्गतशान्तिविधिरूप मङ्गतब्राह्मण मपि न ग्रन्थान्तरम्; अपि सायणनिर्दिष्टस्य पञ्चाध्यायात्मकस्य द्वितीयस्य षड्विंशाख्यस्य,—अस्मदभिमतस्य त्रिंशदध्यायात्मकस्य प्रौढनामकस्य छान्दोग्याद्यभागस्य, अन्तिम एवाध्यायः; यथा च प्रसिद्धान्येव शतपथब्राह्मणाद्यन्तर्भूतान्यग्निब्राह्मणादीनि।

ननु प्रतिशाख मेकैक मेव ब्राह्मण मभ्युपगन्तव्यं चेत् सामविधानादीनां का गतिरिति? अत्र ब्रूमः,—अस्तु तेषा मनुब्राह्मणत्व मिति; सङ्गच्छेत च तथा "अनुब्राह्मणादिनिः (४.२. ६२.)"—इत्येतत्पाणिनीयसूत्रस्योदाहरणम्; अन्यथा शिरो नास्ति शिरो-व्यथेतिवत् सूत्रं तदानर्थक्य मेव व्रजेत्; क्वापि अनुब्राह्मण-ग्रन्थादर्शनात्। निदानसूत्रादावपि यदुपात्त मनुब्राह्मणं नाम, तदप्येतदभिप्रायेणैवेति। अतएव च ब्राह्मणवचनोद्धृतिः श्रूयते ह्यार्षेये (१. १.) "अथापि ब्राह्मणं भवति"-इति॥

मन्त्राणा मृषिच्छन्दोदैवतविनियोगास्त्ववश्य मभ्युपेयाः। तथाहि शासनम्—"यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाध्यापयति वा स्थाणुं वर्च्छति गर्त्तं वा पद्यति प्र वा मीयते पापीयान् भवति (आ॰ ब्रा॰ १. १.)"—

इत्यादि। अतोऽत्र सर्वत्र ऋष्यादिबोधनाय च नैनं यत्नः कर्त्तव्यः।

यस्य मन्त्रस्य यः प्रकाशको रचयिता वा स एव तस्य ऋषिरिति व्यपदेशभाग् भवति; मन्त्रब्राह्मणस्थमन्त्राणान्तु प्रायः सर्वेषां रचयितारः प्रकाशयितारो वा अनिर्णेया इति प्राचीनैरपि तेषामेक एव परमेष्ठी प्रजापतिः, परमेश्वर एवेति यावद्दृषित्वेन कल्पित इत्यनुभूयते; प्रकाशयिष्यते च तथेह प्रथममन्त्रव्याख्यानारम्भे एवैकत्र।

प्रार्थनीयतया, वर्णनीयतया, व्यवहरणीयतया वा यत् किञ्चनोपास्यम्, तत्सर्वमेव देवतेति व्यपदिश्यते; तथैवेह सर्वत्र बोधयिष्यते च। दैवतविचारस्तु विशेषतो ज्ञातव्यश्चेत् मत्सम्पादिते टीकाटीप्पन्याद्यन्विते यास्कीये निरुक्ते, मत्कृतानुवादसहिते सभाष्ये दैवतानुब्राह्मणे, मत्कृतस्य वैदिकसमालोचनस्य देवताशीर्षकाध्याये चेक्षणीयः।

मन्त्रब्राह्मणीयमन्त्रास्तु प्रायः सर्व एव गोभिलीयसूत्रानुसारेण गृह्ये कर्मणि विनियोक्तव्या भवन्तीति सर्वत्रैवात्र व्याख्यारम्भेषु यथायथं सूचयिष्यन्ते सङ्केताक्षरैर्गोभिलीयसूत्राणि च।

छन्दांसि च तथा तत्र सर्वत्र व्याख्यानारम्भेष्वेव ज्ञापयिष्यन्ते; परं नैव तानि सर्वाण्येव गुणविष्णुभट्टाद्यनतिप्राचीनव्याख्यातृमतानुगानि भविष्यन्ति; अपि भविष्यन्त्येव मदनुसन्धानमूलकानि तद्विरुद्धान्यपीति; तदुभयोः पक्षयोः कतरो ज्यायानिति छन्दःशास्त्रदर्शिभिः पक्षपातशून्यैर्धीमद्भिरेव विचारणीयम्। तद्विचारसम्बन्धायाय चेह वैदिकछन्दःशास्त्रनिष्कर्षरूपाणि कतिचित् छन्दोलक्षणानि च दर्शयामः। तथाहि—

( क )

| | छन्दांसि ७ | | अतिच्छन्दांसि ७ | | विच्छन्दांसि ७ | |
|---|---|---|---|---|---|---|
| १ | गायत्री | २४ | अतिजगती | ५२ | कृतिः | ८० |
| २ | उष्णिक् | २८ | शक्करी | ५६ | प्रकृतिः | ८४ |
| ३ | अनुष्टुप् | ३२ | अतिशक्करी | ६० | आकृतिः | ८८ |
| ४ | बृहती | ३६ | अष्टिः | ६४ | विकृतिः | ९२ |
| ५ | पङ्क्तिः | ४० | अत्यष्टिः | ६८ | संकृतिः | ९६ |
| ६ | त्रिष्टुप् | ४४ | धृतिः | ७२ | अतिकृतिः | १०० |
| ७ | जगती | ४८ | अतिधृतिः | ७६ | उत्कृतिः | १०४ |

( ख )

| छन्दः -- | गायत्री | उष्णिक् | अनुष्टुप् | बृहती | पङ्क्तिः | त्रिष्टुप् | जगती |
|---|---|---|---|---|---|---|---|
| आर्षी | २४ | २८ | ३२ | ३६ | ४० | ४४ | ४८ |
| दैवी | १ | २ | ३ | ४ | ५ | ६ | ७ |
| आसुरी | १५ | १४ | १३ | १२ | ११ | १० | ९ |
| प्राजापत्या | ८ | १२ | १६ | २० | २४ | २८ | ३२ |
| याजुषी | ६ | ७ | ८ | ९ | १० | ११ | १२ |
| साम्नी | १२ | १४ | १६ | १८ | २० | २२ | २४ |
| आर्ची | १८ | २१ | २४ | २७ | ३० | ३३ | ३६ |
| ब्राह्मी | ३६ | ४२ | ४८ | ५४ | ६० | ६६ | ७२ |

( ग )

| छन्दांसि | विराट् | निचृत् | शुद्धा | भुरिक् | स्वराट् |
|---|---|---|---|---|---|
| गायत्री | २२ | २३ | २४ | २५ | २६ |
| उष्णिक् | २६ | २७ | २८ | २९ | ३० |
| अनुष्टुप् | ३० | ३१ | ३२ | ३३ | ३४ |
| बृहती | ३४ | ३५ | ३६ | ३७ | ३८ |
| पङ्क्तिः | ३८ | ३९ | ४० | ४१ | ४२ |
| त्रिष्टुप् | ४२ | ४३ | ४४ | ४५ | ४६ |
| जगती | ४६ | ४७ | ४८ | ४९ | ५० |

अतिच्छन्दोविच्छन्दसोरप्येवमेव विराडादयः समूह्याः ।

षड्विंशत्यक्षराया ऋचः स्वराड्गायत्रीच्छन्दो निर्णय मुत विराडुष्णिक् छन्द इत्याद्याशङ्कानिरासार्थोक्तं पिङ्गलेन "आदितः सन्दिग्धे (३. ६१.)"—इति। तथाच सन्दिग्धच्छन्दस्के मन्त्रे आदिपाददर्शनादेव छन्दोनिर्णयः कर्त्तव्य इति च तल्लक्षणार्थः। तदेवं यद्यादिपादो गायत्र्याः स्यात् तर्हि स मन्त्रो स्वराड्गायत्रीच्छन्दस्क एव, यद्यादिपाद उष्णिहः स्यात् तर्हि स मन्त्रो विराडुष्णिक्छन्दस्कः। एवं सर्वत्र।

( घ )

१ अथ गायत्रीच्छन्दः प्रथमम्।

| | |
|---|---|
| ८—८—८=२४ | त्रिपाद् गायत्री |
| ६—६ ६—६=२४ | चतुष्पदा ,, |
| ७—७—७=२१ | पादनिचृत् ,, |
| ६—८—७=२१ | अतिपादनिचृत् ,, |
| ९—९—६=२४ | नागी ,, |
| ६—९—९=२४ | वाराही ,, |
| ६—७—८=२१ | वर्द्धमाना ,, |
| ८—७—६=२१ | प्रतिष्ठा ,, |
| ६—६—७=१९ | ह्रसीयसी ,, |
| १२—८=२० | द्विपाद्विराट् ,, |
| ११—११—११=३३ | विराट् ,, |
| ६—७—११=२४ | उष्णिग्गर्भा ,, |
| ७—६—७=२० | अतिनिचृत् ,, |
| ५—५—५—५=२०, (षट्कस्यैकः) ५—५—५—५—६=२६, ५—५—५—४=१९ | पदपङ्क्तिः ,, |
| ७—१०—७=२४ | यवमध्या ,, |
| ८—४—८=२० | पिपीलिकमध्या ,, |
| ५—६—६—६=२३ | भुरिङ्मती ,, |
| ६—८—८=२२ | ककुम्मती ,, |

( ङ )

२ उष्णिक्छन्दो द्वितीयम् ।

| | |
|---|---|
| ८—१२—८=२८ | ककुबुष्णिक् |
| १२—८—८=२८ | पुरउष्णिक् |
| ८—८—१२=२८ | परोष्णिक् |
| ७—७—७—७=२८ | चतुष्पादुष्णिक् |
| ११—१२—४=२७ | न्यङ्कुशिरा: ,, |
| ११—११—६=२८ | तनुमध्या ,, |
| ५—८—८—८=२९ | अनुष्टुब्गर्भा ,, |
| ८—५—८—८ / ८—८—५—८ } २९ | पिपीलिकमध्या ,, |

( च )

३ अनुष्टुपछन्दस्तृतीयम् ।

| | |
|---|---|
| ८—८—८—८=३२ | चतुष्पादनुष्टुप् |
| १२—१२—८=३२ | कृति: ,, |
| ८—१२—१२=३२ | त्रिपात् ,, |
| १२—८—१२=३२ | पिपीलिकमध्या ,, |
| ५—५—५—५—५—६=३१ | महापदपङ्क्ति: ,, |
| ९—१२—९=३० | कविराट् ,, |
| ९—१०—१३=३२ | नष्टा ,, |
| १०—१०—१०=३० | विराट् ,, |
| १०—१०—११=३१ ,, | ,, |

( क )

४ बृहतीच्छन्दश्चतुर्थम् ।

| | |
|---|---|
| ८ — ८ — १२ — ८ = ३६ | पथ्या बृहती |
| ८ — १२ — ८ — ८ = ३६ | न्यङ्कुसारिणी ,, |
| | स्कन्धोग्रीवी ,, |
| | उरोबृहती ,, |
| ८ — ८ — ८ — १२ = ३६ | उपरिष्टाद् बृहती |
| १२ — ८ — ८ — ८ = ३६ | पुरस्ताद् बृहती |
| ९ — ९ — ९ — ९ = ३६ | चतुष्पाद् ,, |
| १० — १० — ८ — ८ = ३६ | ,, ,, |
| १२ — १२ — १२ = ३६ | ऊर्ध्वबृहती |
| | महाबृहती |
| | सतोबृहती |
| ८ — १० — १० — ८ = ३६ | विष्टारबृहती |
| १३ — ८ — १३ = ३४ | पिपीलिकमध्या ,, |
| ९ — ८ — ११ — ८ = ३६ | विषमपदा ,, |

( ख )

५ पङ्क्तिच्छन्दः पञ्चमम् ।

| | |
|---|---|
| १२ — ८ — १२ — ८ = ४० | सतःपङ्क्तिः |
| ८ — १२ — ८ — १२ = ४० | विपरीता ,, |
| ८ — ८ — १२ — १२ = ४० | आस्तारपङ्क्तिः |
| १२ — १२ — ८ — ८ = ४० | प्रस्तारपङ्क्तिः |
| ८ — १२ — १२ — ८ = ४० | विष्टारपङ्क्तिः |
| १२ — ८ — ८ — १२ = ४० | संस्तारपङ्क्तिः |
| ५ — ५ — ५ — ५ = २० | अक्षरपङ्क्तिः |

इय मेवाक्षरपङ्क्तिर्नाम कात्यायनमते पदपङ्क्तिर्गायत्री ; हलायुधमते त्वेषा ५—५=१० इत्थं दशाक्षरात्मिकैवेति च ।

५—५—५—५—५—५—५—५=४० अक्षरशःपङ्क्तिः

५—५—५—५—५=२५ } पदपङ्क्तिः

४—६—५—५—५=२५ }

८—८—८—८—८=४० — पथ्या ,,

१०—१०—१०—१०=४० चतुष्पदी ,,

( भ )

६ त्रिष्टुप् छन्दः षष्ठम् ।

११—८—८—८—८=४३ पुरोज्योतिः त्रिष्टुप्

८—८—११—८—८=४३ मध्येज्योतिः ,,

८—८—८—८—११=४३ उपरिष्टाज्ज्योतिः ,,

११—११—११—११=४४ चतुष्पाद् ,,

१२—१२—११—११=४४ } जागते सूक्ते जगती ;

११—११—१२—१२=४४ }

१२—११—१२—११=४४ } त्रैष्टुभे सूक्ते त्रिष्टुप् ।

११—१२—११—१२=४४ }

१०—१०—१२—१२=४४ अभिसारिणी त्रिष्टुप्

९—९—१०—११=३९ विराट्स्थाना ,,

१४—१०—५—११=४० ,, ,,

११—११—११—८=४१ विराड्रूपा ,,

१२—१२—१२—८=४४ ज्योतिष्मती ,,

८—८—८—८—१२=४४ महाबृहती ,, *

८—८—१२—८—८=४४ यवमध्या ,,

१०—१०—८—८=४४ पङ्क्त्युत्तरा, विराट्पूर्वा च

* एवैवोपरिष्टाज्ज्योतिर्नाम जगती पिङ्गलस्य ।

( ञ )

७ जगतीच्छन्दः सप्तमम्।

८—८—८—८—८—८=४८ षट्पदी जगती †

१२—१२—१२—१२=४८ चतुष्पाद् ,,

१२—८—८—८—८=४४ पुरोज्योतिः ,,

८—८—१२—८—८=४४ मध्येज्योतिः ,,

८—८—८—८—१२=४४ उपरिष्टाज्ज्योतिः ,,

८—८—८—१२—१२=४८ महासतोबृहती ,,

८—८—७—६—१०—९=४८ महापङ्क्तिः ,,

अत्र सर्वत्र मन्त्रेषु स्वाहा-पदं विहायैव छन्दो निर्णेतव्यम्; गोभिलीयादिविनियोजकसूत्राद्यनुसारत एव तत्पदस्य हेयोपादेयत्वेन मन्त्रानवयवत्वसिद्धान्तात्। एवं यस्य कस्य च मन्त्रस्य यथाकथमपि ऋक्त्वे सिद्धे यजुष्ट्वेन व्यपदेशोऽप्यन्याय्य एव; दैव्यौत्यादिच्छन्दोलक्षणानां वैयर्थ्यापत्तेरिति दिक्।

यथाविधिमन्त्रोच्चारणमात्रत एव कालेषु फलान्युत्पद्यन्त इति वादिनामपि गलेकुठारन्यायेन प्रयोक्तव्यमन्त्राणामर्थबोधोऽतिप्रयोजनीय इत्यभ्युपेय एव; प्रामाणिकवरैर्वेदाङ्गकर्तृभिरसकृत्तथैवोक्तेरन्यथा मन्त्रार्थपरग्रन्थानामपार्थतापत्तेश्च। तथाहि शिक्षावचनम्—

“गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः।
अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः”—इति॥

‘गीती’ वङ्गदेशीयदुर्गामाहात्म्यपाठकानामिव स्वेच्छा-

---

† भट्टहलायुधेन त्वियं पङ्क्तित्वेनोपन्यस्ता, तत् प्रौढिवादमात्रम्; षट्चत्वारिंश द्व्यक्षराधिक्येनैवास्या जगतीत्वसिद्धेः, त्रिष्टुब्जगत्योः प्रधानत्वस्याभ्युपगन्तव्यत्वादिति दिक्।

नुसारत एव अर्थज्ञानहीनपि मन्यन् पाठकारी ; 'लिखित-पाठकः' यो हि नैव गुरुमुखाधीतविद्यः। निरुक्तमध्ये तु प्रथमाध्यायस्य षष्ठपादीयप्रथमादिखण्डचतुष्टये श्रुतिप्रमाणानि दर्शयन्नेवार्थज्ञानर्थज्ञयोः स्तुतिनिन्दे प्रतिपादिते विस्तरशः ; ततस्तेतत् किञ्चिदुद्धरामीह। तथाहि—

"* * * अथापि ज्ञानप्रशंसा भवत्यज्ञाननिन्दा च ॥१

स्थाणुरयम्भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्।
योऽर्थज्ञ इत् सकलं भद्र मश्नुते नाक मेति ज्ञानविधूतपाप्मा ॥

यद् गृहीत मविज्ञातं निगदेनैव शब्द्यते।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्।
* * * ॥ २ ॥"—इति।

पातञ्जले महाभाष्येऽप्युक्त मेव.मेव। तथाहि पस्पशायाम् —

"इमानि च भूयः शब्दानुशासनस्य प्रयोजनानि।
* * * यदधीत मविज्ञातं * * *।
तस्मादनर्थकं माधिगीष्महीत्यध्येयं व्याकरणम्" —इति।

अतएव मन्त्राणा मनुष्ठानानुस्मारकत्व मपि निर्णीतं मीमांसा-दर्शने। तथाह्यधिकरणमालायाः प्रथमाध्यायस्य द्वितीयपादीय-चतुर्थाधिकरणे प्रथमवर्णकम्—

"मन्त्रा उरुप्रथस्वेति किं मदृष्टैकहेतवः।
यागेषूत पुरोडाशप्रथनादेश्च भासकाः।
ब्राह्मणेनापि तज्ज्ञानान्मन्त्राः पुण्यैकहेतवः।
न तज्ज्ञानस्य दृष्टत्वाद् दृष्टे वर मदृष्टतः ॥"—इत्यादि।

तदेवं सर्वथैव प्रतिपद्यते मन्त्राणा मर्थज्ञानेऽप्यवश्यं यति-

न्य मिति; तत एवैतद् व्याख्यानं सप्रयोजन मित्येतेनैवाभिधेय-सम्बन्धावप्याख्यातावित्यलं पल्लवितेन।

अथ 'न ज्ञायते क्रियमाण मिदं व्याख्यान मपव्याख्यानं वा प्रतिपद्यते? वेदार्थस्त्वतिसूक्ष्मोऽहन्तु स्थूलः स्थूलधीश्च; अपि स्मर्यते चैवं नैरुक्तत्रयोदशे—

"सेयं विद्या श्रुतिमतिबुद्धिः,

तस्यास्तपसा पार मीप्सितव्यम्"—इत्येवमादि।

मनुसंहितायां ब्रह्मचारितपोलक्षण मप्यभिहितम्—

"वेदाभ्यासो हि विप्रस्य तपः पर मिहोच्यते।

आ हैव स नखाग्रेभ्यः परमं तप्यते तपः।

यः स्रग्व्यपि द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम्"॥ इत्यादि।

तादृशं तपस्तु गुरुणानुमतोऽह मप्यचरं यथाशक्ति ब्रह्मचर्यं, परं कथ मनुगच्छेयं ममास्ति तत्प्रभावो न वेति? एतादृशाशङ्काकुलितचित्तस्यापि मे प्रवृत्तिः "न संशय मनारुह्य नरो भद्राणि पश्यति"—इति विष्णुशर्मवचनात्; तदत्र सम्प्रणिपातं याचे 'सन्तः सन्त्ववलम्बनम्'—इति। स्मरामि चैतद् भट्टकुमारिलवचनम्—

"आगमप्रवणश्चाहं नापवाद्यः स्खलन्नपि।

न हि सद्वर्त्मना गच्छन् स्खलितेष्वप्यपोद्यते॥"—इति शम्॥

# ভূমিকা।

বেদ ও বিদ্যা তুল্য কথা। অতিপ্রাচীনকালে, আদি-উন্নতির সময়ে, আর্য্যজাতির অনুপম অভ্যুন্নতির পূর্ণাবস্থায়, অসদৃশ ধীষণাবান্ দেবপ্রকৃতি বহুদর্শী, মহাপ্রাজ্ঞ, তপোবলে বলীয়ান্, ঋষিনামক অসাধারণ পরীক্ষায় সমুত্তীর্ণ, অস্মদাদির পূর্ব্বপুরুষগণ কর্ত্তৃক প্রকাশিত বিবিধবিদ্যার মূল উপদেশ বাক্যগুলিকে বেদ কহে। এই বেদই আর্য্যজাতির,—এমন কি জগতের সর্ব্বমানবমণ্ডলীর বিদ্যোপদেশের আদি গ্রন্থ। বিদ্যাশিক্ষার জন্য ইহাই পৃথিবীতে প্রথম গ্রন্থ। ইহার পূর্ব্বে এ ভূমণ্ডলে কোনরূপ বিদ্যাশিক্ষার জন্য কিছুমাত্র গ্রন্থ ছিল বলিয়া অদ্যাপি প্রকাশ পায় নাই। ইহাই ভারতবাসী আর্য্য জাতির ধর্ম্মমূল; এতদবলম্বনেই যাবতীয় ( অকৃত্রিম ) সূত্র-গ্রন্থ ও সংহিতাগ্রন্থ পরে পরে প্রণীত ও প্রচলিত হইয়াছে। অস্মদীয় পুরাণ, উপপুরাণ, ইতিহাস, মহাকাব্য, নীতিশাস্ত্র প্রভৃতি গ্রন্থে অদ্ভুতবর্ণনারঞ্জিত যে সমস্ত প্রাচীন গল্প দেখা যায়; প্রায় তৎসমস্তেরই মূল রূপকথাগুলি এই বেদেই আছে। তন্ত্রশাস্ত্রের অধিকাংশ বেদবিরুদ্ধ হইলেও তন্ত্রের মধ্যে যেগুলি অপেক্ষাকৃত প্রাচীন, তাদৃশ কোন তন্ত্রেই বেদের অমর্য্যাদা প্রকাশ নাই; বিশেষত দোষশূন্য তদীয় উপদেশগুলি অধিকাংশই বৈদিকচ্ছায়াবলম্বনে প্রণীত। এবং আমাদের দর্শনগ্রন্থসমূহ বিভিন্ন-মত-প্রকাশক হইলেও কোনখানিতেই আপনাকে বেদের অনুগত বলিয়া প্রতিপন্ন করিতে চেষ্টার ত্রুটি করা হয় নাই। এই সুবিস্তীর্ণ অতিবৃদ্ধ ভারতে বয়ঃপ্রভাবে

তন্ত্রাদি বিবিধ বাতকণ্টকাদি সমুৎপন্ন হইলেও এখনও বেদের উপরিই হিন্দুসমাজের জীবন নির্ভর করিতেছে! এই মহাদেশে কালে কালে ধর্ম্মগ্রন্থ বলিয়া অনেক আবর্জ্জনাই স্থান লাভ করিয়াছে সত্য! কিন্তু কোনগ্রন্থই বেদের অপসারণ করিতে সমর্থ হয় নাই; আজিও হিন্দুমাত্রকেই জন্ম হইতে মৃত্যু পর্য্যন্ত বৈদিক আদেশের শাসনে থাকিতেই হইতেছে। কালক্রমে বেদের প্রতিদ্বন্দ্বিস্বরূপ তন্ত্রাদি উপশাস্ত্রের প্রবল স্রোত প্রবাহিত হইলেও কোন তান্ত্রিক ব্রাহ্মণই বৈদিক চিহ্ন উপবীতধারণাদি পরিত্যাগ করিয়াও ব্রাহ্মণসমাজে তিষ্ঠিতে পারেন না এবং পৌরাণিকমতের প্রচার বাহুল্য থাকিতেও কাশীতে মৃত সুতরাং নির্ব্বাণপ্রাপ্ত পিতাদিরও বৈদিক পিণ্ডদান ক্রিয়াদির কিছুমাত্র বৈলক্ষণ্য দেখা যায় না।

সেই বেদগ্রন্থ বস্তুত এক হইলেও গদ্য পদ্য ও গীতি এই ত্রিবিধ রচনায় রচিত বলিয়াই ত্রয়ী নামে প্রসিদ্ধ কিন্তু যাগাদিকার্য্যের সৌকর্য্যার্থ কালক্রমে চতুর্ভাগে বিভক্ত হইয়া ঋক্, যজু, সাম ও অথর্ব্ব এই চারি নাম লাভ করিয়াছে। পরে বহুকালে বহুবিধ পাঠভেদ সমুৎপন্ন হইবায় এবং বহুদেশীয় অধ্যাপকগণের অধ্যাপনক্রমভেদ, উচ্চারণভেদ ও অনুষ্ঠানাদিভেদ হইতে থাকায় ঐ চারিবেদেরই বহুতর শাখা অনুশাখা হইয়াছে। তৎসমস্ত শাখাদির মধ্যে যজুর্ব্বেদীয় কতিপয় শাখার সহিত কতিপয় শাখার এতই ভেদ দেখা যায় যে ঐগুলিকে পরস্পর শুক্ল কৃষ্ণ না বলিয়া থাকা যায় না। অতএব তদনুসারে এক্ষণে বেদের সংখ্যা পঞ্চ বলাও নিতান্ত অনুপযুক্ত নহে।

বেদগুলি সংহিতা ও ব্রাহ্মণ নামে ভাগদ্বয়ে বিভক্ত। সকল বেদেরই একখানি করিয়া সংহিতা এবং প্রত্যেক প্রধান-শাখার একখানি করিয়া ব্রাহ্মণগ্রন্থ আছে কিন্তু সর্ব্ববেদ-ভাষ্যকার মহামান্ত সায়ণাচার্য্য বলেন সামবেদের কৌথুমী শাখার ব্রাহ্মণসংখ্যা আটখানি—

"অষ্টৌ হি ব্রাহ্মণগ্রন্থাঃ প্রৌঢ়ং ব্রাহ্মণ মাদিমম্।
ষড়্বিংশাখ্যং দ্বিতীয়ংস্যাৎ ততঃ সামবিধির্ভবেৎ।
আর্ষেয়ং দৈবতং চৈব মন্ত্রং বোপনিষৎ ততঃ।
সংহিতোপনিষদ্ বংশো গ্রন্থা অষ্টাবিতীরিতাঃ॥

(তাং ব্রাং ভাং ভূং)

এতদনুসারে প্রকাশ্যমান গ্রন্থখানিকে মন্ত্রব্রাহ্মণ বা উপনিষদ্ব্রাহ্মণ বলা উচিত এবং ইহা ষষ্ঠ হইতেছে।

আমার বিবেচনায় সকল প্রধানশাখারই যেরূপ এক এক-খানিই ব্রাহ্মণগ্রন্থ দেখাযায়, কৌথুমীশাখারও তাহাই সম্ভবপর অতএব কৌথুমীয় ব্রাহ্মণসংখ্যা অষ্ট স্বীকার্য্য নহে অথচ সায়-ণোল্লিখিত আটখানির কোনখানিই অগ্রাহ্যও নহে। আমি বলি,—'তাণ্ড্য' নামে প্রসিদ্ধ একখানি গ্রন্থই সামবেদীয় কৌথুমী শাখার ব্রাহ্মণ। ঋক্ ও যজু অর্থাৎ গদ্য ও পদ্য উভয়কেই ছন্দঃ কহে ঐ ছন্দঃ গান করিলেই সাম হয় অত-এব সামবেদীয় ব্রাহ্মণকে অর্থাৎ অস্মদাদিকে ছন্দোগ কহে; ছন্দোগ-প্রকাশিত বলিয়াই হউক বা ছন্দোগগণের জন্য বলিয়াই হউক এই গ্রন্থখানির যৌগিক নাম 'ছান্দোগ্য' এবং এই ছান্দোগ্য গ্রন্থ তাণ্ডি নামক সামগাচার্য্যকর্তৃক প্রকাশিত বলিয়া ইহার বিশেষ নাম 'তাণ্ড্য';

সায়ণোক্ত 'প্রৌঢ়' নামটি ইহার পূর্ব্বভাগমাত্রের। আরও বলি,—যেরূপ শতপথ ব্রাহ্মণ গ্রন্থ ৪০শৎ অধ্যায় এবং যাজ্ঞিক ও ঔপনিষদ্‌রূপ ভাগদ্বয়ে বিভক্ত, সামবেদের এখানিও সেইরূপ; ইহার যাজ্ঞিক অংশ পূর্ব্বভাগখানি ৩০ অধ্যায়ে বিভক্ত; আর ১০ অধ্যায়ে বিভক্ত শেষভাগখানিই ঔপনিষদ্ এবং ইহার পূর্ব্বভাগের আদি-অধ্যায়দ্বয়ে যেরূপ শ্রৌতকার্য্যের মন্ত্রগুলি দেখা যায়, উত্তরভাগের আদি-অধ্যায়দ্বয়েও সেইরূপ গৃহ্যকার্য্যের মন্ত্রগুলি গ্রন্থীকৃত। ভগবান্ সায়ণাচার্য্য ছান্দোগ্যব্রাহ্মণের ত্রিংশদধ্যায়াত্মক পূর্ব্বভাগের ২৫ অধ্যায়কেই 'প্রৌঢ়' সংজ্ঞা দিয়াছেন এবং ষড়্‌বিংশাদি পাঁচটি অধ্যায়কে 'ষড়্‌বিংশ' নামক দ্বিতীয় বলিয়া স্থির করিয়াছেন; প্রকৃতপক্ষে তদীয় শ্লোকমধ্যে দ্বিতীয় বলিয়া নির্দ্দিষ্ট 'ষড়্‌বিংশ' নামে পরিচায়িত পঞ্চাধ্যায় বিভিন্ন গ্রন্থ নহে, প্রত্যুত ঐ প্রৌঢ় ব্রাহ্মণেরই যাজ্ঞিক ভাগের ষড়্‌বিংশাদি শেষ পাঁচ অধ্যায়মাত্র। ষড়্‌বিংশ নামে বর্ণিত গ্রন্থাংশটুকুর শেষ অধ্যায়টীতে অদ্ভুত শান্তি উপদিষ্ট থাকায় কেহ কেহ উহাকে 'অদ্ভুতব্রাহ্মণ'ও বলেন; কেহ কেহ বা ঐ শেষ অধ্যায়টীকেই 'অদ্ভুতব্রাহ্মণ' নির্দ্দেশ করত কৌথুমশাখীয় ব্রাহ্মণ-গ্রন্থের আরও এক সংখ্যা বৃদ্ধি করিয়াথাকেন। এতাবতা ইহা ভূয়োবাদমাত্র, যে ষড়্‌বিংশ ও উহার শেষ অদ্ভুত, এতদুভয়ই তাণ্ড্য ব্রাহ্মণেরই যাজ্ঞিক ভাগের শেষ অংশ মাত্র; ঐ শেষটুকুর সহিত ঐ যাজ্ঞিকভাগ ৩০শৎ অধ্যায়ে বিভক্ত স্বীকরণীয়। এইরূপ সায়ণাচার্য্যের পরিগণিত ৬ষ্ঠ খানির প্রকৃত নাম, মন্ত্রও নহে উপনিষৎও নহে, প্রত্যুত

উহার আদি অধ্যায়দ্বয় 'মন্ত্রব্রাহ্মণ' বলিয়া প্রসিদ্ধ ও তৎপরের অষ্ট অধ্যায়ই 'ছান্দোগ্য উপনিষৎ' বলিয়া প্রসিদ্ধ; সাকল্যে এই দশ-অধ্যায়াত্মক গ্রন্থ খানি সমস্তই ঐ তাণ্ড্য নামক ছান্দোগ্য ব্রাহ্মণেরই শেষভাগমাত্র। বস্তুত প্রৌঢ়, ষড়্বিংশ, অদ্ভুত, মন্ত্র ও উপনিষৎ এতৎসমুদায়ে একখানিই সামবেদের ব্রাহ্মণ এবং এ সমস্তই 'ছান্দোগ্য'।

সামবিধি বা সামবিধান, আর্ষেয়, দৈবত বা দেবতাধ্যায়, সংহিতোপনিষৎ ও বংশ, এ পাঁচ খানি, প্রকৃত ব্রাহ্মণ গ্রন্থ নহে; পরং বৈদিকসমাজে ব্রাহ্মণসদৃশ সম্মাননীয়; এইজন্যই ইহাদিগকে "অনুব্রাহ্মণ" কহে। যদি এগুলিও ব্রাহ্মণ গ্রন্থই হয়, তবে "নিদানসূত্র" প্রভৃতি গ্রন্থে উল্লিখিত অনুব্রাহ্মণ গ্রন্থ কি? কি জন্যইবা ভগবান্ পাণিনিও "অনুব্রাহ্মণাদিনিঃ (৪.২.৬২.)" সূত্রটি রচনা করিয়াছেন? ইহা অবশ্য বিবেচনীয়।

ছান্দোগ্য ব্রাহ্মণের দ্বিতীয় দলের প্রথম ও দ্বিতীয় যে অধ্যায়দ্বয়কে "মন্ত্রব্রাহ্মণ" বলা যায়, তাহাই এই। সামবেদী কৌথুমশাখীয় ব্রাহ্মণগণের বিবাহ প্রভৃতি সংস্কারসমূহে যে সমস্ত মন্ত্র ব্যবহৃত হইয়া থাকে, এই গ্রন্থ তাহারই পেটিকাস্বরূপ। অতএব বলা বাহুল্য ইহা প্রত্যেক কৌথুমশাখীয় ব্রাহ্মণের বিশেষ প্রয়োজনীয় এবং তাবতেরই অতিযত্নে সংগ্রহণীয়। নিতান্ত দুঃখের বিষয়, এতাদৃশ প্রয়োজনীয় গ্রন্থের একখানি পুস্তকও কিছুদিন পূর্ব্বে এ বিস্তৃত বঙ্গভূমিতে অদৃষ্টচর ছিল। এই দুঃখ দূর করণার্থই আমি ১৭৯৪ শকাব্দাতে একবার এই 'মন্ত্রব্রাহ্মণ' সটীক সানুবাদ করত

প্রকাশ করিয়াছিলাম কিন্তু সেবার বৃদ্ধবচনে শ্রদ্ধাতিশয্য-প্রযুক্ত বিশেষ অনুসন্ধান না করিয়া গুণবিষ্ণু প্রভৃতি অনতি-প্রাচীন পণ্ডিতদিগের মতানুসারে লেখনী চালিত করায় ঐ টীকা ও ঐ বঙ্গানুবাদ আমার চিরানুতাপেরই হেতু হইয়া রহিয়াছে; সেই পশ্চাত্তাপ নিবৃত্তির জন্যই এবার নিরপেক্ষভাবে যথামতি পুনশ্চ নূতন টীকা ও বঙ্গানুবাদ প্রস্তুত করিয়া তৎসহ ইহা এই দ্বিতীয়বার প্রকাশ করিতেছি। এবারই যে এ টীকা ও এ বঙ্গানুবাদ একেবারে ভ্রমশূন্য হই-তেছে, তাহাও বিশ্বাসযোগ্য নহে; প্রত্যুত আমার ন্যায় তপোহীন গ্রন্থকর্ত্তার প্রতিপদেই বিষম ভ্রমই সম্ভবপর! পরং উদ্দেশ্যের অনিন্দনীয়তার অনুরোধেই বিদ্বৎসমাজে এ ধৃষ্টতা মার্জ্জনীয় হইতে পারে! এতন্মাত্র ভরসাতেই এতাদৃশ অসদৃশ কার্য্যে পুনঃ পুনঃ অসমসাহসিকতা প্রকাশে বদ্ধকটি হইয়াথাকি। অশেষ-শেমুষী-সম্পন্ন আচার্য্য ভট্ট কুমারিল মহোদয়ও মীমাং-সার শ্লোকবার্ত্তিকের ভূমিকাতে ইহাই বলিয়াছেন। যথা—

"আগমপ্রবণশ্চাহং নাপবাদ্যঃ স্খলন্নপি।
ন হি সদ্বর্ত্মনা গচ্ছন্ স্খলিতেষ্বপ্যপোদ্যতে॥"

"সামবিধান" নামক অনুব্রাহ্মণ, যাহা এক্ষণে সায়ণা-চার্য্যের মতানুসারে সামবেদীয় তৃতীয় ব্রাহ্মণ, তাহার প্রথম প্রপাঠকীয় প্রথমখণ্ডেই বিধি আছে যে, — যে, যে মন্ত্র ব্যবহার করিবে তাহার ঋষি, ছন্দ ও দেবতা স্থিরতররূপে অবগত হইবে; অন্যথা তৎ তৎ মন্ত্রের ব্যবহার বৃথা হইবে। এইজন্যই সন্ধ্যোপাসনাদি সর্ব্বকার্য্যেই প্রতিমন্ত্রের ঋষ্যাদি অবশ্য বিজ্ঞেয় হইয়াথাকে।

(ঋষি) মন্ত্রের রচয়িতা বা প্রকাশক ব্যক্তির জ্ঞানকেই ঋষিজ্ঞান কহে অর্থাৎ এই মন্ত্রের রচয়িতা বা প্রকাশক অমুক ঋষি, এইটি নিশ্চয় অবগত হইতে পারিলেই সেই মন্ত্রের ঋষি-জ্ঞান সম্পন্ন হইল। যখন যে মন্ত্রটি ব্যবহার করিতে হইবে, তখনই সেই মন্ত্রের রচয়িতা বা প্রকাশকের নামও স্মরণ করিতে হইবে! ইহাই উক্ত সামবিধান ব্রাহ্মণের উপদিষ্ট বিধি। মন্ত্রব্রাহ্মণে শ্রুত অধিকাংশ মন্ত্রেরই রচয়িতা বা প্রকাশয়িতা নির্ণীত হইবার সম্ভাবনা নাই; বোধহয় সেইজন্য তৎসমস্ত মন্ত্রেরই স্রষ্টা একমাত্র "পরমেষ্ঠী প্রজাপতি" স্বীকৃত হইয়াথাকেন; যাহাহউক এতদীয় প্রত্যেক মন্ত্রের পাঠকালেই রচয়িতা বলিয়া একমাত্র তিনিই স্মরণীয় হইবেন।

(ছন্দঃ) পাদ ও অক্ষর সংখ্যানুসারেই বৈদিকছন্দ নিরূপিত হইয়া থাকে। পূর্ব্বপ্রদর্শিত সামবিধানে শ্রুত বিধিরই শাসনানুসারে কোন্ মন্ত্রটী কোন্ ছন্দে গ্রথিত ইহাও একটী অবশ্য জ্ঞাতব্য। অতএব প্রতিমন্ত্রের ব্যখ্যানারম্ভের পূর্ব্বেই যথাযথ ছন্দোনামোল্লেখও করা হইবে। এস্থলে নিতান্ত ক্ষোভের সহিত বলিতেই হইতেছে, যে বৈদিকছন্দোনির্ণয় করা, অতিসামান্য বিষয় হইলেও এতদংশেও উক্ত গুণবিষ্ণু মহোদয়ের প্রায়ই ভ্রম দেখা যায়। তৎসমস্ত এক একটি নির্দ্দেশ পূর্ব্বক প্রদর্শন করা এবং প্রত্যেকস্থলে বিচার পূর্ব্বক খণ্ডন করা অপেক্ষা যে ছন্দঃশাস্ত্রানুসারে বৈদিক ছন্দ নির্ণীত হইয়াথাকে, সেই শাস্ত্রের বিধিসমূহের নিষ্কর্ষ যাহাতে সহজে পাঠকগণের বোধগম্য হইতেপারে, তাহার চেষ্টাই

সমধিক আদরণীয় হইতেপারে বিবেচনায় তদ্বিষয়েই যত্নবান্ হইলাম। তত্ত্বাবৎ সংস্কৃত ভূমিকাংশে দ্রষ্টব্যং।

(দেবতা) যে মন্ত্রে যাহার স্তুতি বা বর্ণনা করা যায় অথবা যাহার নিকটে কোনরূপ প্রার্থনা বোধিত হয়, সেই মন্ত্রের উহাই দেবতা। এই দেবতাজ্ঞানের জন্যও প্রতি-মন্ত্রের ব্যাখ্যানারম্ভের পূর্ব্বেই যত্ন করা যাইবে। দেবতা-সম্বন্ধে অনেকানেক জ্ঞাতব্য আছে; টীকা টীপ্পন্যাদি সহ মৎসম্পাদিত যাস্কীয় নিরুক্ত, মৎপ্রকাশিত সটীক সানুবাদ দৈবতব্রাহ্মণ এবং মৎকৃত বৈদিক সমালোচনা-স্থ 'দেবতা'-শীর্ষক প্রবন্ধ দেখিলেও তৎসমস্ত অনেটা বুঝিতেপারাযায়।

(বিনিয়োগ) এই মন্ত্রব্রাহ্মণে শ্রুত মন্ত্রগুলির কোন্ কার্য্যে কোন্ মন্ত্রের কিরূপে ব্যবহার বিহিত হইয়াছে? এই বিনিয়োগ-জ্ঞানও নিতান্ত প্রয়োজনীয় অতএব যথাস্থানে ইহার উল্লেখেও ত্রুটি হইবে না; বিশেষত জানিতে হইলে তত্তৎস্থলে প্রদর্শিত অঙ্কানুসারে গোভিলের গৃহ্যসূত্রগুলি সমালোচনীয়।

এই গ্রন্থরত্নের সংক্ষিপ্ত টীকা এবং বঙ্গানুবাদের সহিত প্রকাশ, বঙ্গবাসী সামবেদী মহোদয়গণের অতীব আদরণীয় হইবে,—এই আশাতেই এ শ্রমটুকু স্বীকার করিতেছি পরন্ত জানিনা ইহার পরিণাম কিরূপ? কিন্তু ভীতও নহি; কেননা ইহাই আমার সতত প্রার্থনীয়—"যদ্ ভদ্রং তন্ন আসুব"।

কলিকাতা।
শকাব্দা ১৮১১

শ্রীসত্যব্রত শর্ম্মা।

## ॥ पारस्करसूची ॥



## ॥ सविषयमन्त्रसूची ॥

## ॥ मन्त्रप्रतीकसूची ॥

# ॥ अथ मन्त्र ब्राह्मणम् ॥

## ॥ अथ प्रथमः प्रपाठकः ॥

तत्र

### ॥ तत्र प्रथम-खण्डः ॥

**ॐ। देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय। दिव्यो गन्धर्वः केतपूः केतन्नः पुनातु वाचस्पतिर्वाचन्नः स्वदतु ॥ १**

मन्त्रस्यैतस्य परमेष्ठी प्रजापतिर्ऋषिः (अत्र सर्वत्रैवैष एव ऋषिर्ज्ञेयः); पङ्क्त्युत्तरा त्रिष्टुप् छन्दः; सविता देवता; अग्निपर्युक्षणे विनियोगः—गो० गृ० १,३,४ सू०।

हे 'देव' सर्वत्र द्योतमान! 'सवितः' जगत्प्रसवितः! त्वम् 'यज्ञं' इदं कर्म्म 'प्रसव' अनुजानीहि। 'भगाय' कर्म्मफल-भजनाय 'यज्ञपतिं' माम् 'प्रसुव' अनुजानीहि; अनुष्ठितकर्म्म-फलभाजं मां कुर्विति यावत्। किञ्च, 'दिव्यः' द्युमध्यस्थः, 'गन्धर्वः' गां पृथिवीं धारयति यः सः, 'केतपूः' केतं प्रज्ञां चित्तं पुनाति यः सः, सूर्यः त्वत्प्रसादात् 'नः' अस्माकम् 'केतं' चित्तम् 'पुनातु' निर्म्मलीकरोतु। अपि 'वाचस्पतिः' वाचामधिपतिः 'देवः' सोमाख्यः 'नः' अस्माकम् 'वाचः' गिरः 'स्वदतु' आस्वादयतु देवानिति शेषः ॥ १

হে দ্যোতমান জগৎপ্রসবিতা দেবতা! তুমি এই কর্ম্ম করিতে আমাকে অনুমতি দাও এবং এই কর্ম্মের ফলভাগী হইতেও আমাকে অনুমতি দাও।

দ্যুলোকের মধ্যবিন্দুরূপে স্থিত, পৃথিবীর ধারয়িতা এবং সর্ব্বচিত্তপবিত্রকারী সূর্য্য দেবতা, তোমার প্রসাদে আমাদিগের চিত্তক্ষেত্র পবিত্র করুন এবং বাক্যের অধিষ্ঠাত্রী সোম দেবতাও আমাদিগের বাক্যকে সুমধুর করুন ॥ ১

काम वेद ते नाम मदो नामासि
समानयामुं सुरा ते अभवत् । परमत्र
जन्माग्ने तपसो निर्मितोसि स्वाहा ॥ २

अस्य पादनिचृत्-प्रस्तारपङ्क्तिश्छन्दः, कामो देवता, शान्तिकर्मणि सुरया (जलेन) कन्या शिरःप्लावने विनियोगः - गो० गृ० २,१,१० सू० ।

हे 'काम' ! ते' तव 'नाम' 'वेद' जानाति ; सर्वं जगदिति शेषः । किम्पुनस्तदित्याह—'मदः' मदकरः 'नाम' प्रसिद्धः 'असि' भवसि । 'ते' त्वदीया 'सुरा' त्वदीयं मादकजलम् 'अभवत्' इह कन्यायां प्रादुर्भूतमिति यावत् । अतएव एतन्नाम्निकां कन्यकां 'समानय' सम्यक् प्रापय, 'अमुं' एतन्नामकं पति मिति भावः । हे 'अग्ने' कामाग्ने ! 'अत्र' कन्याशरीरे तव 'परं जन्म' उत्कृष्टा जनिः ; भूतेति शेषः । त्वं 'तपसः' तपसे धर्म्माचरणाय 'निर्म्मितः' 'असि' भवसि ; विधात्रेति शेषः । 'स्वाहा' शोभना उक्तिः 'एषा भवतु'—इति शेषः ॥ सुरेति निघण्टावुदकनामसु पञ्चविंशतितमं पदम् । तपसइति चतुर्थ्यर्थे षष्ठी ॥ २

হে কাম দেবতা ! তোমার নাম সকলেই বিদিত আছে ; তুমি মাদক বলিয়া প্রসিদ্ধ । ত্বৎসম্বন্ধিনী মাদকতা এই কন্যাতে প্রকাশ পাইয়াছে ; অতএব ইহাকে এই নামক পতির সমীপে উপনীত কর । হে কামাগ্নে ! এই কন্যাতে তোমার শ্রেষ্ঠ জন্ম হইয়াছে ; তুমি ধর্ম্মাচরণের জন্যই বিধাতৃ কর্ত্তৃক সৃষ্ট হইয়াথাক । —এই উক্তিটী সম্যক্ প্রতিপন্ন হউক ! ॥ ২

अभिभागोऽसि सर्वस्मिंस्तदु सर्वं त्वयि श्रितम् ।
तेन सर्वेण सर्वो मा विवासन विवासय ॥ ११

अनुष्टुप् छन्दः ; आकाशो देवता ; पार्थिवकर्म्मणि क्षुद्रपशुस्वस्त्ययनकामस्य तिलमधुकलहोमे विनियोगः—गो० गृ० ४.५,२१ ; ३० सू० ।

हे आकाश ! 'सर्वस्मिन्' सर्ववस्तुनि त्वम् 'अभिभागः' सर्वतो भजनीयः 'असि' भवसि ; 'तत्' तस्मात् 'सर्वम्' एतत् ब्रह्माण्डम् 'त्वयि' आकाशवन्निरवयवादिलक्षणे आकाशस्याकाशे वा परमात्मनि 'श्रितम् उ' आश्रित मेव, विवृत इति शेषः । हे 'विवासन' स्वप्रकाश ! 'सर्वः' सर्वजगद्भिन्न इति प्रतीतस्त्वं 'तेन' 'सर्वेण' वस्तुना 'मा' मां 'विवासय' प्रकाशय ॥ ११

হে আকাশেরও আকাশ ! তুমি আকাশাদি সর্ব্ববস্তুতেই রহিয়াছ ; এই জগৎ সমস্তই, আকাশতুল্য নিরবয়ব তোমাকেই আশ্রিত রহিয়াছে ; হে স্বপ্রকাশ ! জগন্ময় ! আমাকে এ জগতে প্রকাশ কর ॥ ১১

कोश इव पूर्णो वसुना त्वं प्रीतो ददसे धनम् ।
अदृष्टो दृष्ट माभर सर्वान् कामान् प्रयच्छ मे ॥ १२

भुरिगनुष्टुप् छन्दः ; आकाशो देवता ; पार्थिवकर्म्मणि अर्थकामस्य याचा कुर्वतः सूर्योपस्थाने विनियोगः—गो० गृ० ४.५,२१ ; ३१ सू० ।

हे आकाश ! 'त्वं' 'वसुना' धनेन सर्वेण 'पूर्णः' 'कोशः इव' भवसि, 'प्रीतः' प्रसन्नः सन् 'धनं' मदभिलषितं 'ददसे' ; स त्वम्

'अदृष्टः' निरवयवोऽपि 'दृष्ट' फलम् 'आ भर' आहर,—'मे' मह्यं 'सर्वान् कामान् प्रयच्छ' ॥ १२

হে আকাশের আকাশ! তুমি সর্ব্বধনের পরিপূর্ণ ভাণ্ডার; যাহার যাহা লভ্য, তাহাকে তাহা সতত প্রীতভাবে দিতেছ; তুমি স্বয়ং দৃষ্টি-পথের অতীত হইলেও সকলকে দৃষ্ট ফল দিতেছ; নাথ! আমার সমস্ত অভিলাষ পরিপূর্ণ কর ॥ ১২

**आकाशस्यैष आकाशो यदेतद् भाति मण्डलम्।**
**एवं त्वा वेद यो वेदेशानेशाम् प्रयच्छ मे ॥ १३**

अनुष्टुप् छन्दः; आकाशो देवता; पार्थिवकर्म्मणि स्वस्तिकामस्य प्रत्यागतस्य सूर्य्योपस्थाने विनियोगः—गो० गृ० ४,५,२१; ३२ सू०।

'एतद्' मस्तकोपरि सर्वतः 'यत्' 'मण्डलम्' मण्डलाकारतया दृश्यमान माकाशं 'भाति' चक्षुर्गोचरं भवति, अस्य 'आकाशस्य' सर्वान्तरादिलक्षणस्यावकाशस्य च 'आकाशः' अन्तर्बहिर्व्यापकत्व 'एषः' ज्ञानचक्षुर्गोचरोऽयमीशानः। हे 'ईशान!' महेश्वर! 'वेद' सर्वज्ञ! 'त्वा' त्वाम् 'एवं' इत्थं 'यः' मनुष्यः 'वेद' जानाति, तादृशाय 'मे' मह्यं 'ईशान्' ऐश्वर्यविभूतीः 'प्रयच्छ' प्रदेहि ॥ १३

এই মস্তকের উপরি সর্ব্বদিকে যে মণ্ডলাকার অসীম আকাশ দেখা যাইতেছে; ইহারও অন্তরে বাহিরে আকাশের ন্যায় বিদ্যমান ইনিই ঈশান। হে ঈশান! যে ব্যক্তি তোমাকে এইরূপ ভাবে দেখিতেছে, তাদৃশ আমায় ঐশ-বিভূতি প্রদান কর ॥ ১৩

**भूर्भुवःस्वरोम् सूर्य इव दृशे भूयासमग्निरिव तेजसा वायुरिव प्राणेन सोम इव गन्धेन बृहस्पति-**

रिव बुद्ध्याश्विनाविव रूपेणेन्द्राग्नी इव बलेन ब्रह्म-
भाग एवाहं भूयासं पाप्मभागा मे द्विषन्तः ॥१४॥ ४

यजुः ; बुद्ध पञ्चमात्मा देवता, पापरोगादितो रक्षाकामप्रतिदिनजपे वि०—गो० ७,३,६,१।

हे 'भूर्भुवःस्वरोम्'! 'भूः' पृथिवी, 'भुवः' अन्तरीक्षम्, 'स्वः' द्यौः,—एतल्लोकत्रयव्यापक! 'ओम्'—इतिएतत्प्रतीकगम्य! परमात्मन्! अथवा पृथिवीस्थानोऽग्निः अन्तरीक्षस्थो वायुः, स्वःस्थः सूर्यः, ओ मित्यात्मनः प्रतीकम्; एतच्चतुष्टय मेवात्र सम्बोध्यम्। भवतः भवतां वा प्रसादात् 'दृशे' दर्शनेन्द्रियविषये समदर्शितया 'सूर्य इव' 'भूयासम्'! 'अग्निः इव' यथा अग्निस्तेजस्वी तथा 'तेजसा' युक्तः भूयासम्! 'वायुरिव' वायुर्यथा अतिप्रभावः तथा 'प्राणेन' प्रभावेण युक्तः भूयासम्! 'सोमः' ओषधिविशेषः सुगन्ध इति विश्रुतः, स 'इव' 'गन्धेन' युक्तः भूयासम्! 'बृहस्पतिः' जगत्पतिः, स 'इव' 'बुद्ध्या' प्रज्ञया युक्तः भूयासम्! 'अश्विनौ' अश्वाविव वेगगमनशीलौ सूर्यचन्द्रौ, तौ 'इव' 'रूपेण' युक्तो भूयासम्! 'इन्द्राग्नी' इन्द्रो मेघचालको वायुविशेषः, तत्सहावस्थितोऽग्निश्च माध्यमिकः, तौ यथा बलवन्तौ, 'इव' तथा 'बलेन' युक्तः भूयासम्! 'अहम्' 'ब्रह्मभागः' कृत्स्नब्रह्मज्ञानांशः 'भूयासम्'!—अपितु 'मे' मम 'द्विषन्तः' ब्रह्मज्ञानपरिपन्थिन इन्द्रियादयः 'पाप्मभागाः' पापभागिन इत्येव मद्विज्ञाताः सन्तु ॥ १४ ॥ ४

इति सामगश्रीसत्यव्रतसामश्रमिविरचितायां
"मन्त्रसञ्जीवनी"-नामिमन्त्रब्राह्मणव्याख्यायाम्
द्वितीयप्रपाठकीयः चतुर्थः खण्डः ॥ ४

হে ভূর্ভুবঃস্বঃ-[ ত্রিলোক ]-ব্যাপক, প্রণব-[ ওঁ ]-বোধ্য, পরমাত্মন্ ! আপনার প্রসাদে, সকল বস্তুর সমদর্শনসম্বন্ধে যেন সূর্য্যের ন্যায়, তেজে যেন অগ্নির ন্যায়, প্রভাবেতে যেন বায়ুর ন্যায়, সুগন্ধে যেন সোমের ন্যায়, বুদ্ধিতে যেন বৃহস্পতির ন্যায়, রূপে যেন বেগ-গমনশীল অশ্বিদ্বয়ের (সূর্য্য ও চন্দ্র) ন্যায়, অত্যুৎকট বলে যেন ইন্দ্রাগ্নীর ( মহাবলিষ্ঠ, মেঘচালক বায়ু ও বিদ্যুৎ ) ন্যায় হইতে পারি ! আমি যেন ব্রহ্মলাভ করিতে পারি, এবং আমার ব্রহ্মলাভের পরিপন্থীরা (ইন্দ্রিয়প্রভৃতি) যেন আমার নিকটে পাপভাগ বলিয়া প্রতিপন্ন হয় ! ॥ ১৪ ॥ ৪

সামবেদীয় মন্ত্রব্রাহ্মণের দ্বিতীয়প্রপাঠকীয় চতুর্থ খণ্ডের
সত্যব্রত সামশ্রমীর কৃত বঙ্গানুবাদ সমাপ্ত ॥ ৪

---

॥ অথ পঞ্চমঃ খণ্ডঃ ॥

मूर्ध्नोऽधि मे वैश्रवणाङ्गिरसोऽनुप्रविशिनः ।
ललाटाद् घस्मरान् घोरान् विघनान् विवृहामि वः
( स्वाहा ) ॥ १

एतदादीनां पञ्चानाम् अनुष्टुप् छन्दः ; वैश्रवणनामाधयो देवताः ; मलमपनोदन-कर्मणि एकैकयाहुतिदाने विनियोगः—गो० गृ० ४,९,२ सू० ।

मूर्धोत्थात्वमेवमिदं सूक्तम् । तत्र पञ्चमो मूर्धोत्थात्वयः, पुरुषोऽयमि, शारीरैर्वेगुताभिश्च हेतुरिति विद्वान् सूचयन्तः पुरुषस्योद्यमपरतां विदधति ; ततो हि पुरुषस्यालस्यपरता भवतेत्रव दौर्बाध्येति सूचयन्तो सर्वथा तां वर्जयतः ; अन्त्या तु प्रजापतेः प्रसादत एव घटति पुरुषस्योद्यमपरता आलस्यपराङ्मुखता चेति ध्वनयन्तो तस्यैव शरण मुपगन्तव्य मिति वेदयति ।

किञ्चाद्यास्तु पञ्चसु वर्णिता वैश्रवणाः विश्रवसो माध्यमिकस्य विद्युदिति प्रसिद्धस्याग्नेर्भागा अग्नय एव ; ततो द्वयोर्वर्णितः परिबाधः खलु तद्दग्धाग्निविकारज एवेति सोऽप्यग्निः ; उत्तमायां स्तुतः प्रजापतिश्चेह प्रजापालको जीवशरीररक्षकः परमात्मांशोऽग्निरेवेति ।

'मे' मम 'मूर्ध्नः' ब्रह्मरन्ध्रभागात्, 'शिरसः' मस्तकपश्चाद्भागात्, 'ललाटात्' मस्तकसम्मुखभागाच्च प्रकाशमानान् कार्यतो गम्यमानान् 'वैश्रवणान्' श्रवांस्यन्नानि भवन्ति यत्प्रसादतः, श्रवः कीर्त्तिर्वा विविधा विद्यते यस्य, सोऽसौ देवोऽग्निर्दुःखः सूर्य इति प्रसिद्धोऽन्तरीक्षस्थो विद्युद्रूपश्च, रुद्र इति विश्रवा इति च कीर्त्यते । तस्य ये भागा जीवाद्यवयवाद् वहिः सञ्चरन्तस्तापयन्तेऽत्र सर्वान्, त एव रौद्रा उच्यन्ते ; ये तु सर्वजीवशरीराणां मन्तः सर्वत्र सर्वथा सञ्चरन्तश्चालयन्तेऽत्र सर्वावयवान्, त एव वैश्रवणा उच्यन्ते । तान् 'वः' युष्मान् 'मुर्चि' अधिकृत्य 'विहृणामि' उद्यमं करोमि । 'हृङ् उद्यमने' तुदादिः, तस्यैवेदं रूपम् ; मान्यमात् कस्मादपि धातोः किञ्चिदपि व्यत्यय मन्तरा भवेत् साध्यं द्रष्टव्यमिति ; अतोऽत्र सर्वत्र उद्यमार्थ एव व्याख्यातव्यः । कर्मालब्ध मिति शेषः । युष्मांश्च

कीदृशानित्याह;—'अनुप्रविविशन:' सर्वत्रानुप्रवेशशीलान्; 'प्रत्व-रान्' प्रत्वरान् अनवकान्, मारीच्छद्दुष्टरसानां शोषयितॄनिति यावत्; 'घोरान्' भयङ्करान्, आधिक्येनेति भावः; 'धिषणान्' अन्तरालमूल्यान्, जीवच्छरीरांशेषु सर्वत्र विद्यमानानिति।— 'स्वाहा' उक्त मेतत् सुहुतं भवतु ॥ १

মূর্দ্ধোদি প্রভৃতি অষ্ট ঋকের একটী সূক্ত। তন্মধ্যে পাঁচ ঋকে, শারীর বৈদ্যুতাগ্নিই উদ্যমশীলতার নিদান,—ইহা সূচন করত দারিদ্র্যভয়ে ভীত প্রতি ব্যক্তিরই উদ্যমশীলতার প্রয়োজনীয়তা প্রকাশ করা হইয়াছে; তৎপরের ঋগ দ্বয়ে, শারীর বৈদ্যুতাগ্নির ন্যূনতা নিবন্ধনই অলসতা উপস্থিত হইয়া থাকে এবং কর্ম্মনাশন আলস্যই মেদোবৃদ্ধির প্রধান হেতু ইত্যাদি প্রকাশ করত উহার দূরীকরণই দারিদ্র্যদোষবারণের প্রথম উপায় প্রকাশ করা হইয়াছে; অনন্তর প্রজাপতির কৃপা ব্যতীত কিছুই সিদ্ধ হইবার নহে অতএব তাঁহার নিকটে প্রার্থনা প্রকাশ করা হইয়াছে। সমস্ত প্রজার অর্থাৎ অস্মদাদির পালনকারী অধীশ্বরকেই প্রজাপতি কহে; তিনিই পরমেশ্বর পরব্রহ্ম কিন্তু সেই পরব্রহ্মের স্বতন্ত্র স্বরূপ না থাকায় তিনি অগ্নি বায়ু প্রভৃতি সর্ব্বস্বরূপেই সৃষ্টি স্থিতি প্রলয় করিতেছেন সুতরাং তিনি অগ্নি বায়ু প্রভৃতির নিদান হইলেও তত্তন্নামেই উপাসিত হইয়াথাকেন; এস্থলে যেহেতু শারীর বৈদ্যুতাগ্নির হ্রাসে আলস্যাদি, বৃদ্ধিতে উন্মত্ততাদি এবং সাম্যেই স্ফূর্ত্তিভাব সহ উদ্যমশীলতা, সেই উদ্যমশীলতাই দারিদ্র্য ভাবের প্রধান ঔষধ বর্ণিত হইল অতএব এস্থলে সেই শারীর বৈদ্যুতাগ্নিই প্রজাপতি দেবতা বুঝিতে হইতেছে।

আমার মস্তকের মধ্যভাগ ব্রহ্মরন্ধ্র হইতে, মস্তকের পশ্চাদ্ভাগ কৃপুচ্ছিকা হইতে, মস্তকের সম্মুখভাগ ললাট হইতে সর্ব্বদা কার্য্যত প্রকাশমান বৈশ্রবণ সমূহকে অধিকার করিয়াই আমরা উদ্যমশীল হইয়াথাকি।

শ্রবস্ শব্দে অন্ন এবং কীর্ত্তি, যাঁহার প্রসাদে অন্ন উৎপন্ন হইয়াথাকে এবং যাঁহার এবংরূপ কীর্ত্তি অতুলনীয়া. সেই দেবতাকেই বিশ্রবা মুনি কহে।

ইনি তেজঃপদার্থ ভিন্ন আর কিছুই নহেন। দ্যুলোকে পরিদৃশ্যমান তেজঃ-পিণ্ড ঐ সূর্য্যই তেজের প্রধান ভাণ্ডাগার। ঐ সূর্য্য হইতেই অন্তরীক্ষে সঞ্জাত মেঘসমূহেও বিদ্যুদাকার তেজ প্রকাশ পাইয়াথাকে, উহাকেই মাধ্যমিক তেজ কহে। সূর্য্য ও মাধ্যমিক তেজ বিদ্যুৎ এতদুভয়ের কার্য্য অন্নোৎপাদন এবং এ উভয়ই বিশ্রুত; এতাবতা ইহাঁরাই বিশ্রবা মুনি; রুদ্রও ইহাঁদের নামান্তর। বিশ্রবার পুত্রগণ অর্থাৎ প্রতিয়াক্তিতে বিভিন্ন বিদ্যুদংশসমূহই বৈশ্রবণ। শরীরের অভ্যন্তরসঞ্চারী বৈদ্যুতিক তাপকে বৈশ্রবণ এবং বহিঃসঞ্চারী আতপকে রৌদ্র কহা যায়। বস্তুত উভয়ই বিশ্রবা ও রুদ্র হইতে সমুৎপন্ন হইয়া থাকে সুতরাং উভয়েরই উভয় নাম সুতর্পর হইলেও স্থানপার্থক্যে নামবিভাগ চিরব্যবহৃত হইয়া আসিতেছেমাত্র।

এই মন্ত্রে বৈশ্রবণের বিশেষণত্রয় আছে। ১ম অনুপ্রবেশী। অনুপ্রবেশশীল অর্থাৎ যিনি অতিসূক্ষ্মতা নিবন্ধন সর্ব্বশরীরের সর্ব্বত্র প্রবেশ করিয়া থাকেন। ২য় ঘোর। ভয়ানক অর্থাৎ শরীরে যদীয় অংশাধিক্যে উন্মত্তাদি জন্মে। ৩য় বিঘন। বিশেষঘন অর্থাৎ অন্তরালশূন্য।

—এই উক্তি সম্যক্ সম্পন্না হউক ॥ ১

ग्रीवाभ्यो मे स्कन्धाभ्यां मे नस्तो मेऽनुप्रवेशिनः ।
मुखान्मे वद्दतान् घोरान् विघनाम् विवृंहामि वः
(स्वाहा) ॥ २

'मे' मम 'ग्रीवाभ्यः', 'मे' 'स्कन्धाभ्याम्' 'मे' 'नस्तः' नासिकाद्वयतः, 'मे' 'मुखात्' वदनाच्च प्रकाशमानान् कार्यतो गम्यमानान् तान् 'वः' युष्मान् वैश्रवणान् 'अधि' अधिकृत्य 'विवृंहामि' उद्यमं करोमि, कार्यस्य सिद्धि शेषः। युष्मांश्च कीदृशानित्याह—'वद्दान्' वदावदौतिवक्ता, तादृशान्, अतिवक्तृत्वहेतूनिति भावः; 'घोरान्' भयङ्करान् आधिक्येन; 'विघनान्' व्यापिततयेति।—'स्वाहा' एतत् सुहु भवतु ॥ २

আমার গ্রীবা হইতে, আমার স্কন্ধদ্বয় হইতে, আমার নাসাদ্বয় হইতে এবং আমার মুখ হইতে প্রকাশমান, অতিবক্তা হইবার নিদান, ভয়ানক, বিঘন, সেই বৈশ্রবণ দেবগণকে অধিকার করিয়াই আমরা উদ্যমশীল হইয়া থাকি।—এই উক্তি সম্যক্ সম্পন্না হউক ॥ ২

বাহুভ্যাং মে যতোযতঃ পার্শ্বয়োস্তু তানধি ।
ভংস্তো বহুদান্ ঘোরান্ বিঘনান্ বিবৃহামি বঃ
( স্বাহা ) ॥ ৩

'মে' 'বাহুভ্যাং' 'তু' অপি 'পার্শ্বয়োঃ' 'ভত্' অত্র 'যতোযতঃ' যস্মাৎ যস্মাৎ প্রদেশাৎ, 'ভংস্তঃ' বক্ষঃপ্রদেশাচ্চ প্রকাশমানান্ 'বহুদান্' 'ঘোরান্' 'বিঘনান্' 'তান্' প্রসিদ্ধান্ বৈশ্রবণান্ 'বঃ' যুষ্মান্ 'অধি' অধিকৃত্য 'বিবৃহামি' উদ্যমং করোমি।— 'স্বাহা' উক্তং সুহু ভবতু ॥ ৩

আমার বাহুদ্বয় হইতে, পার্শ্বদ্বয়ের যে যে স্থান হইতে এবং বক্ষঃপ্রদেশ হইতে প্রকাশমান, অতিবক্তা হইবার নিদান, ভয়ানক ও বিঘন বৈশ্রবণ-দেবসমূহকে অধিকার করিয়াই আমরা উদ্যমশীল হইয়া থাকি।—এই উক্তি সম্যক্ সম্পন্না হউক ॥ ৩

বঙ্ক্ষাভ্যাং মে লোহিতাদান্ যোনিষ্ঠান্ পত্তিষ্ঠানধি ।
জরুভ্যো নিষ্ঠিভো ঘোরান্ বিঘনান্ বিবৃহামি বঃ
( স্বাহা ) ॥ ৪

'মে' মম 'বঙ্ক্ষাভ্যাম্' 'জরুভ্যঃ' জানুভ্যামিভ্যঃ অধি প্রকা-

अस्माकम् 'वः' युष्मान् वेत्रवणान् 'अधि' अधिकृत्य 'विवृहामि' उद्यमं करोमि; कर्म्मप्रवचनीयस्य मिति। कोदृशान् युष्मानित्याह—'निस्रिवः' सर्वेष्ववयवेषु स्रिष्यमाणान्, 'लोहितादान्' लोहित-भक्षकान्; क्षीयन्ते हि लोहितानि शारीररक्तानि वेत्रवताधि-क्यात्, अतएव कृश भवन्ति वातुलादयः; 'योनिहान्' मूले-योनिजलं स्रुक्तेरवाग्निस्तत एव स्वयोनिभन्न इत्युच्यते किञ्च यस्मात् कस्मादपि अरण्यादेरग्निरुत्पद्यते, तदेव दग्धीकरोति, तादृशान्; 'पञ्चिहान्' 'पञ्चा पृथिवीत्याहुः अपि वा माध्य-मिका वाक् पञ्चा'—इति ७,२,७,४ ऋग्व्याख्याने सायणः; तथाच पञ्चा पृथिवी, पृथ्वीभागाधिक्यरूपो गुरुत्वहेतुर्विद्यतेऽस्य स्थूलतयेति पंजि आलस्यम्, तस्य विघातकान्; अथवा पञ्चा माध्यमिका वाणी, सा विद्यते यत्र, स पञ्जो मेघः, तस्य छेद-कान्; यथा च घनतरीभ्याम् मेघान् भिन्दती विद्योतते विद्युत् तथैव शारीरमेघानपीति।—'स्वाहा' आह यत् तत् सुहुतं भवतु ॥ ४ ॥

আমার কুক্ষিদ্বয় হইতে, আমার উরুস্থানসমূহ হইতে প্রকাশমান, শরীরে শ্লিষ্যমাণ, লোহিতশোষণ, রমনাশন, আলস্যবিনাশন, বৈত্রবণ-দিগকে অধিকার করিয়াই আমরা উদ্যমশীল হইয়া থাকি।—এই উক্তি যথোক্ত সম্পন্ন হউক। ৪

जङ्घाभ्यां मे यतीयतः पाष्णिभ्यां तानधि ।
पादयोर्विकिरान् घोरान् विवृहामि वः (स्वाहा) ॥ ५ ॥

'मे' मम 'जङ्घाभ्याम्' 'तु' अपि 'पादयोः' स्थितयोः

'পাষ্ণ্যোঃ' দ্বয়োঃ 'তৎ' তদ্ভ্রষ্টাৎ 'যতীয়তঃ' প্রকাশমানান্ 'বিকিরান্' সর্বদেহেষু সর্বত্র বিকীর্ণান্, 'ঘোরান্' ভয়ঙ্করান্, 'বিষমান্' অন্তরালশূন্যান্ নিবিড়ান্ 'বঃ' যুষ্মান্ বৈশ্রবণান্ 'অধি' অধিকৃত্য 'বিহরামি' উদ্যমং করোমি, কর্ম্মেত্যহমিতি শেষঃ ।—'স্বাহা' আহ যৎ তৎ সুষ্ঠু ভবতু ॥ ৫

আমার জঙ্ঘাদ্বয় হইতে, পাদদ্বয়ের পাষ্ণিদ্বয়ের যে যে স্থান হইতে প্রকাশমান, দেহের সর্ব্বত্র বিকীর্ণ, ভয়ানক ও বিষম, বৈশ্রবণ দেবসমূহকে অধিকার করিয়াই আমরা উদ্যমশীল হইয়া থাকি।—এই উক্তি সম্যক্ সম্পন্না হউক ॥ ৫

পরিবাধং যজামহে পুরুজঙ্কং শবলোদরম্ ।
যো নোঽয়ং পরিবাধতে দানায় চ ভগায় চ
(স্বাহা) ॥ ৬
অপেহি ত্বং পরিবাধ মা বিবাধ বিবাধথাঃ ।
সুগং পন্থানং মে কুরু যেন মা ধনং নেষ্যতি
(স্বাহা) ॥ ৭

অনয়োরনুষ্টুপ্ ছন্দঃ, পরিবাধরূপবিঘ্নতদুপাসনাধিদৈবতা, অলক্ষ্ম্যাপনোদনকর্ম্মণি একৈকয়াজ্যহোমে বিনিয়োগঃ—গো০ গৃ০ ৪,৯,২ সূ০

'যঃ' শারীরো ভাবঃ 'অয়ং' সর্বপরিচিতঃ আলস্যমিতি, এবাঙ্গস্বভাবঃ 'নঃ' অস্মান্ 'দানায়' সম্প্রদানসৌমাদিদান কর্ম্মণি 'চ' অপি 'ভগায়' ঐশ্বর্য্যসম্পাদনকর্ম্মণি 'চ' পরি

बाधते' सर्व्वतः पीडयति, बाधां ददातीति स्फुटम्। तत एव वयं अस्याभावात् अणुजङ्घाः क्षीणजङ्घाः, अपि मेदस आधिक्यात् प्रबलोदराः स्थूलोदराश्च भवामः ; तादृशयोः क्षीणजङ्घत्व-स्थूलोदरत्वयोर्मूल मपि तथैव व्यपदिश्यते तथाच 'अणुजङ्घम्' अणुजङ्घहेतुम्, 'प्रबलोदरं' प्रबलोदरहेतुम्, तं 'परिबाधं' सर्व्व-कार्य्येषु बाधादायिन मलसभावं 'यजामहे' पूजयामहे, अनु-नयाम इति यावत्।—'स्वाहा' आह यत् तत् सुष्ठु भवतु ॥ ६

अनुनयेन च किम्प्रार्थनीय मित्याह—हे 'परिबाध' आलस्य-भाव! 'त्वम्' 'अपेहि' अपगच्छ, मत्तो दूर मपसर ;—हे 'विबाध' सर्व्वकार्य्यबाधाकारिन्! मां 'मा विबाधथाः' मत्कार्य-बाधां माकार्षीः। प्रत्युत 'मे' मम सुदर्थं 'सुगं' सुखगमनं 'पन्थानं' मार्गं 'कुरु' स्वदूरगमनेनैवोद्भावय ;—'येन' पथा 'मां' मां 'धनम्' अभिलषितम् 'एष्यति' त्वद्गमनात् परमिति।—'स्वाहा' आह यत् तत् सुष्ठु भवतु ॥ ७

যে ভাব আলস্য বলিয়া সর্ব্বপরিচিত, উহাই আমাদের শ্রমের ও ভোগের বাধাকারী, তাহাতেই আমাদের মেদোহীনতা বা মেদোবৃদ্ধি ঘটিয়া থাকে এবং তদনুসারে শুষ্কজঙ্ঘ বা অতিস্থূলোদর হইয়া থাকি। এই কার্য্য-বাধাকারী শারীরভাবেরই অন্বর্থ নাম পরিবাধ। পরিবাধ দেবতার নিকটে অনুনয় সহকারে প্রার্থনীয়—হে পরিবাধ! (আলস্য!) তুমি আমার নিকট হইতে দূর হও!—হে বিবাধ! আমার কার্য্যকরণে কখন বাধা দিও না বরং তোমার দূরীভবন হেতুক আমার কার্য্যের যে সুগম পন্থা দেখা যাইবে, তাহা হইতে দাও;—যে পথে আমার অভিলষিত ধন আসিবেই।—এই প্রার্থনা সম্যক্ সম্পন্ন হউক। ৬, ৭

प्रजापते न त्वदेतान्यन्यो
विश्वा जातानि परि ता बभूव ।
यत्कामास्ते जुहुमस्तन्नो अस्तु
वयं स्याम पतयो रयीणां (स्वाहा) ॥ ८

स्वराट् पंक्तिश्छन्दः ; प्रजापतिरूपीऽग्निर्देवता ; भयकृच्छ्रापनोदने वि०—गो० २,६,२ ।

हे 'प्रजापते' प्रजानां मनुष्यादीनां पालक ! वैश्वानराग्निरूप ! परमात्मन् ! यानि 'विश्वा' विश्वानि स्थावरजङ्गमानि 'जातानि' उत्पन्नानि ; 'ता' तानि 'एतानि', 'त्वत्' त्वत्तः 'अन्यः' अपरः कश्चन 'न परिबभूव' न परिभवेत् न तिरस्कुर्यात् ; परिभावस्तिरस्क्रियेत्यमरः ; इह तु तिरोभाव एव तिरस्कारः । तथाच त्वदन्यः कोऽपि एतानि तिरोभावयितुं न समर्थः ; एवं हि त्व मेवैतेषां स्रष्टा पाता हर्त्तेति त्वदन्यो न कोऽप्यस्माकं प्रार्थनीय इति त्वा मेव प्रार्थयामहे इति भावः । प्रार्थना चेय मध्यास्माकम्—वयं 'यत्कामाः' यदेषणायुक्ताः 'जुहुमः' अद्य होमं कुर्मः, 'तत्' इष्टं 'नः' अस्माकम् 'अस्तु' पूर्णं भवतु त्वत्प्रसादात् ; तथाच 'वयं' 'रयीणाम्' अभिलषितधनानां 'पतयः' अधीश्वराः 'स्याम' भवेमेवेति ।—'स्वाहा' चास्य यत तत् सुहुतु भवतु ॥ ८

হে প্রজাপালক দেব ! এই সমুৎপন্ন বিশ্বের তিরোভাব করিতে তোমা-ব্যতীত কেহই সমর্থ নহে সুতরাং তোমার ইচ্ছাধীনই এ জগতের সৃষ্টি স্থিতি-প্রলয় হইয়া থাকে। আপাততঃ প্রার্থনা—অদ্য আমরা যে কামনা করিয়া হোম করিতেছি, তাহা আমাদের পরিপূর্ণ হউক !—আমরা যেন অভিলষ-ণীয় ধনের অধীশ্বর হইতে পারি।—এই প্রার্থনা সম্যক্‌সম্পন্ন হউক। ৮

यशोऽहं भवामि ब्राह्मणानां यशो राज्ञां यशो विशाम् ।
यशः सत्यस्य भवामि भवामि यशसां यशः ॥

स्वराडनुष्टुप् छन्दः ; आदित्यो देवता ; यशस्कामस्य शयनादुत्तिष्ठतः
प्रातरादित्योपस्थाने विनियोगः—गो० गृ० ४, ६, ७ सू० ।

'अहं' 'ब्राह्मणानां' मध्ये 'यशः' यशस्वी 'भवामि' भवेयम् । 'राज्ञां' क्षत्रियाणां मध्ये 'यशः' यशस्वी भवेयम् । 'विशां' वैश्यानां मध्ये 'यशः' यशस्वी भवेय मित्येव । 'सत्यस्य' वक्तेति प्रतिपालयितेति च 'यशः' यशस्वी 'भवामि' भवेयम् । 'यशसां' यशस्कराणां बहुविधानां कर्म्मणां कर्त्तेति च 'यशः' यशस्वी 'भवामि' भवेयम् ॥ ৮

প্রত্যূষে নিদ্রাভঙ্গের পরে শয়ানভাবেই প্রথম প্রার্থনা—
হে আদিত্য দেব ! আমি যেন আপনার প্রসাদে ব্রাহ্মণসমাজে যশস্বী হই। আমি যেন ক্ষত্রিয়সমাজে যশস্বী হই। আমি যেন বৈশ্যসমাজেও যশস্বী হই। সত্যসম্বন্ধেও যেন যশস্বী হই অর্থাৎ সত্যবাদী বলিয়া প্রসিদ্ধ হই এবং অন্যান্য যশস্কর কার্য্যেও যেন যথোচিত যশোলাভে সমর্থ হই ॥ ৯

पुनर्मा यन्तु देवता या मदपचक्रमुः ।
महस्वन्तो महान्तो भवास्यस्मिन्
पाके हरिते सोमपृष्ठे ॥ १०

निचृत्पथ्याबृहती छन्दः ; आदित्यो देवता ; यशस्कामस्य शयनादुपविष्टस्य
प्रातरादित्योपस्थाने विनियोगः—गो० गृ० ४, ६, ७ सू० ।

'अर्हन्तः' तेजोमया:, 'महान्तः' महत्त्वयुक्ताः, 'याः' 'देवताः' शारीराः 'मत्' मत्तः, मद्देहादिति यावत्, 'अपचक्रमुः' अपक्रमणं पलायन मकार्षुः; रात्रौ मयि निद्रिते इति भावः। अथ प्रातः, अहम् 'सोमपृष्ठे' सोमाधारे, अतएव 'हरिते' आइले 'अस्मिन्' शरीररूपे, काचादिनिर्म्मिते स्वच्छे चषके वा 'पात्रे' 'भवामि' निविष्टोऽस्मि, पुनर्नवजीवन मुपलभे इति भावः। इदानीं ताः देवताः 'मा' मां प्रति 'पुनः आयन्तु' पुनरागच्छन्त्विति ॥ १०

উপবিষ্ট হইয়া ('চষক' নামে সোমপানপাত্র হস্তে লইয়া ?) দ্বিতীয় প্রার্থনা—

তেজোময়, মহত্ত্বযুক্ত, যে শারীর দেবতারা রাত্রে আমি নিদ্রিত হইলে আমার দেহরূপ কার্য্যক্ষেত্র হইতে পলায়ন করিয়াছে, তাঁহারা আমাকে পুনর্জ্জাগরিত জানিয়া আমার শরীরে পুনরাগমন করুন ॥

रूप रूपं मे दिशः प्रातरह्नस्य तेजसः।
अन्न मुग्रस्य प्राशिष मस्तु वयि
मयि त्वयीद मस्तु त्वयि मयीदम् ॥ ११

निचृदास्तारपङ्क्तिश्छन्दः; आदित्यो देवता; यशस्कामस्य प्रातरादित्योपस्थाने विनियोगः—गो० गृ० ४, ६, ७ सू०।

हे 'रूप' सर्व्वरूपनिदान! सूर्य्य! 'प्रातरह्नस्य' प्रभातकालीनस्य 'तेजसः' दीप्तेः सौम्यं 'रूपं' 'मे' मह्यम् 'दिशः' दिश, देहीति यावत्। 'उग्रस्य' उद्गूर्णस्य तव 'प्राशिषम्' आशीरूपम् 'अन्न' श्रीयादिकं 'वयि' विस्तृते इह-देहे 'अस्तु' प्रकर्षेण भवतु।

কিন্তু 'ময়ি' মৎশরীরে যদস্তি 'ইদং' রসাত্মকং দ্রব্যম্, তৎ 'ত্বয়ি' আকৃষ্টম্ 'অস্তু'; অপি 'ত্বয়ি' যদস্তি 'ইদং' তেজঃ, তৎ 'ময়ি' ন্যস্তম্ অস্তু ॥ ১১

হে সর্ব্বরূপবিধান! আদিত্য! আমাকে প্রভাতকালীন প্রকাশের মহীয় সৌম্য রূপ প্রদান কর। সতত-পালনোদ্যত তোমার প্রসাদে আমাদের এই বিস্তৃত দেশে প্রচুর অন্ন সমুৎপন্ন হউক। আমার শরীরের এই রস তোমাতে আকৃষ্ট হউক এবং তোমার এই তেজ আমার শরীরে সঞ্চারিত হউক ॥ ১১

যদিদং পশ্যামি চক্ষুষা ত্বয়া দত্তং প্রভাসয়া।
তেন মা ভুঙ্ক্ষ্ব তেন ভুক্ষিষীয় তেন মা বিশ ॥ ১২

ভুরিগনুষ্টুপ্ ছন্দঃ; আদিত্যো দেবতা; যজমানাশীস্তু
আদিত্যোপস্থানে বিনিয়োগঃ—গো০ গৃ০ ৪, ৬, ৩ সূ০।

'প্রভাসয়া' ত্বৎপ্রকাশেন সহৈব কার্য্যকারিণা 'চক্ষুষা' চক্ষুরিন্দ্রিয়েণ 'ত্বয়া দত্তং' 'যৎ' 'ইদং' ভোগ্যজাতং 'পশ্যামি', 'তেন' ভোগ্যজাতেন 'অহং' 'ভুক্ষিষীয়' ভোগলালসাতর্পণং ক্ষমীয়; অপি 'তেন' ভোগ্যজাতেন সহৈব 'মা' মাম্ 'আবিশ' প্রবিশ; ত্বদ্রশ্মিপ্রবেশানুগতমেব সর্ব্বভোগ্যোপস্থিতির্মে ভবত্বিতি ভাবঃ ॥ ১২

তোমার প্রকাশের সহায়তাতেই কার্য্যক্ষম, চক্ষুরিন্দ্রিয়ের দ্বারা তোমার প্রদত্ত যাহা কিছু এই ভোগ্যসমূহ দেখিতেছি, এই ভোগ্যসমূহ তোমারই প্রতিপাল্য, আমিও তোমারই প্রতিপাল্য; আমি যেন এই সমস্ত ভোগ্য উপভোগ করত ভোগলালসা চরিতার্থ করিতে সমর্থ হই!—তোমার রশ্মি-সমূহের সঙ্গে-সঙ্গেই যেন সমস্ত ভোগ্য আমাতে সঙ্গত হয়! ॥ ১২

**अह्नो नो अत्यपीपरद्रात्रिर्नो अतिपारयत्।**
**रात्रिर्नो अत्यपीपरदह्नो नो अतिपारयत्॥ १३**

अनुष्टुप्छन्दः आदित्यो देवता ; यशस्कामस्य प्रातरादित्योपस्थाने वि०—गो० ४,६,७।

'अह्नः' दिनम् 'नः' अस्मान् 'अत्यपीपरत्' ( 'पृ प्रीतौ'–इति स्वादिगणीयस्य णिजन्तस्य लुङि रूपम्) अतिशयेन प्रीतान् अकार्षीत्; भोग्यजातोपभोगसहायं भवदिति यावत्। ततः 'रात्रिः' रजनी देवी, दिवाभोग्योपभोगेन क्षीणबलान् 'नः' अस्मान् 'अतिपारयत्' ( 'पॄ पूरणे'–इति चुरादिगणीयस्य लेटि रूपम्) अतिशयेन पूरयति; विनष्टं शारीरं बलादिकं सम्पादयतीति भावः; विश्रामसहायभूता सतीति यावत्। एवं 'रात्रिः' यदा 'नः' 'अत्यपीपरत्', 'अह्नः' तदा 'नः' 'अतिपारयत्'। तथाच दिवाकृतप्रीणनजन्यं बलक्षयादिकं रात्रिः पूरयति; रात्रिकृतप्रीणनजन्यं बलक्षयादिकं दिवा पूरयतीति फलितम्। अह्नो रात्रेश्च कारकः सूर्य एवैकः। स एवास्माक-मुपभोगजन्यायाः प्रीतेर्निदानम्, उपभोगजन्यशारीरक्षयस्य पूरकश्चेति॥ १३

দিবা দেবতা, দিবা-কৃত্যসমূহের সহায়তা করিয়া আমাদিগকে প্রীত করিলে, যে কিছু শারীর বলাদির ক্ষয় হইয়াথাকে, রজনী দেবী, বিশ্রামের সহায়তা করিয়া তাহা পূরণ করিয়া থাকেন; এইরূপ রজনিদেবী, রজনি-কৃত্যসমূহের সহায়তা করিয়া আমাদিগকে প্রীত করিলে, যে কিছু শারীর বলাদির ক্ষয় হইয়াথাকে, দিবা দেবতা পুনশ্চ তাহা দিবা-কৃত্যের সহায়তা করিয়াই পূরণ করিয়া থাকেন। এতাবতা যেহেতু দিবস ও রজনী, এতদুভয়েরই নিদান একমাত্র সূর্য্য, অতএব কি প্রীতিলাভের, কি শারীর-ক্ষতি-পূরণের, সূর্য্যই একমাত্র হেতু সূচিত হইল। ১৩

आदित्य नाव मारोक्ष्यं पूर्णा मपरिपादिनीम् ।
अच्छिद्रां पारयिष्णीᳪ शतारित्राᳪ स्वस्तये ॥
(ओम्नम आदित्याय नम आदित्याय नम आदित्याय १४)

विराडनुष्टुप्छन्दः ; आदित्यो देवता ; स्वस्त्ययनकामस्य
सन्धिवेलयोरादित्योपस्थाने विनियोगः—गो० गृ० ४,६,८ सू० ।

हे 'आदित्य !' 'अपरिपादिनी' परिपादयितुं विपत्प्रापयितुं शील मस्य परिपादी, छिद्रभिन्नादिदोषयुक्तो नौगकलं, नास्ति परिपादी गलत् यस्याः सा अपरिपादिनी, ताम्, उत्कृष्टगकलतीम्, 'अच्छिद्रां' छिद्रादिदोषशून्याम्, 'शतारित्रां' बहुकेनिपातनरूपक्षेपणीयुक्ताम्, 'पारयिष्णीं' पारकरणशीलाम्, 'पूर्णाम्' पण्यद्रव्यैः, 'नावम्' अर्णवपोतम्, 'स्वस्तये' स्वमङ्गलसाधनाय 'आरोक्षम्' आरूढवानहम ॥ तदिदानीं घनघटाभञ्झावातादिविघ्नविनाशनाय तुभ्यम् 'आदित्याय' 'नमः' करोमीति शेषः । पुनरपि 'आदित्याय नमः' ; पुनस्तथैव । नौश्चेयमर्णवपोत एवाभीष्टः ; गुणत्वादीना मनुल्लेखात् ; शतारित्राद्विनिशेषणश्रुतेश्च । सा चेयं नौः सत्या वागेव ; बह्वृगब्राह्मणश्रुतितस्तथैव प्रतीतेः । तथाहि—"वाग् वै सुतर्मा नौः वाच मेव तदारुह्य तया स्वर्गं लोक मभिसन्तरति (१,३,२,)"—इति । 'सुतर्मा', सुष्ठु तारयितुं समर्था ; अन्यत् स्पष्टम् । तथाच वाक्पक्षे—'अपरिपादिनीं', परिपादि असत्यविशेषणीम्, नास्ति तत्, यत्र तादृशीम्, असत्यविशेषणशून्याम् ; सत्या मिति यावत् ; तत एव 'अच्छिद्रां' छिद्रं दोषः, तच्छून्याम् ; तत एव 'शतारित्रां' बहुविपत्त्राणकारिणीम् ; तत एव 'पारयिष्णीं' भवसागरपारकारिणीम् ; 'पूर्णां' सम्पूर्णां सुव्यक्ता मिति विवेकः ॥ १४

"বিপদে পড়িতে হয়, এরূপ ছিন্নভিন্নাদিদোষযুক্ত গরুৎ (পাইল) নাই যাহাতে অর্থাৎ অসত্যভূষণশূন্য এবং ছিদ্রশূন্য অর্থাৎ দোষহীন ও বহু-অরিত্র-যুক্ত অর্থাৎ বহুবিপত্রাণ সমর্থ, পারকারী অর্থাৎ সংসারজলধিতে প্রকৃতকার্য্যকর, বিবিধ-পণ্যপূর্ণ অর্থাৎ যাহা হইতে বহুবিধ সুফল লাভ করা যায়, ঈদৃশ বাক্যরূপ অর্ণবপোতে আরোহণ করিয়া রহিয়াছি"—ইহাই আমাদের সায়ংপ্রাতঃ সর্ব্বদা স্মরণীয়। হে আদিত্য! এ সমস্তেরই নিয়ন্তা তুমি; তোমাকে নমস্কার; তোমাকে পুনশ্চ নমস্কার; পুনরপি তোমাকেই নমস্কার॥ ১৪

## उद्यन्तन्त्वादित्यानूदियासम् ॥ १५

যজুঃ; আদিত্যো দেবতা; স্বস্ত্যয়নকামস্য পৌর্বাহ্ণিকাদিত্যোপস্থানে বি০—গী০ ৪,৬,৫।

**हे 'आदित्य!' 'उद्यन्तम्' 'त्वा' त्वाम् 'अनु' लक्ष्यैव; उपयौति यावत्, अहम् 'उदियासम्' स्वकार्येषु प्रवृत्तो भूयासम् ॥ १५**

হে আদিত্য! আশীর্ব্বাদ কর,—আমি যেন প্রতিদিবস তোমার উদয়ের সঙ্গে-সঙ্গেই কার্য্যক্ষেত্রে উদিত হইতে সমর্থ হই (এতাবতা সূর্য্যোদয়ের পরেও শয়ন ও দিবানিদ্রা নিষিদ্ধ বোধিত হইল)॥ ১৫

## प्रतितिष्ठन्तं त्वादित्यानु प्रतितिष्ठासम् ॥ १६

যজুঃ; আদিত্যো দেবতা; স্বস্ত্যয়নকামস্যাপরাহ্ণিকাদিত্যোপস্থানে বি০—গী০ ৪,৬,১০।

**हे 'आदित्य!' प्रतितिष्ठन्तम्, अस्तं गच्छन्तं 'त्वा' त्वाम् 'अनु' लक्ष्यैव; सायमिति यावत्, अहम् 'प्रतितिष्ठासम्' प्रतिष्ठितः, कर्मसु विरतो भूयासम् ॥ १६**

হে আদিত্য! আশীর্ব্বাদ কর,—আমি যেন প্রতিদিবস তোমার অস্তগমনের সঙ্গেসঙ্গেই কার্য্যসমূহ হইতে অবসর গ্রহণে সমর্থ হই (এতাবতা সূর্য্যাস্তের পরেও কার্য্যকরণ নিষিদ্ধ বোধিত হইল)॥ ১৬

ভলায় স্বাহা ॥ ১৭

ভল্লায় স্বাহা ॥ ১৮ ॥ ৫

যজুষী; আদিত্যদৈবতে, আখিতব্রতকামস্য তণ্ডুলাহুতৌ বিনিযুজ্যেতে—গো গৃ০ ৪,৫,১২।

'ভলায়' দাত্রে, পালয়িত্রে আদিত্যায়; ভলরূপিণ-মাদিত্যং তোষয়িতু-মিতি যাবৎ; যৎ ইদং হবিঃ সমর্পয়ামি, তৎ 'স্বাহা' সুষ্ঠু গৃহীতং ভবত্বিতি ॥ ১৭

'ভল্লায়' হন্ত্রে, সংহারকারিণে আদিত্যায়; ভল্লরূপিণ মাদিত্যং তোষয়িতু মিতি যাবৎ; যৎ ইদং হবিঃ সমর্পয়ামি, তৎ 'স্বাহা' সুষ্ঠু গৃহীতং ভবত্বিতি ॥ ১৮ ॥ ৫

ইতি সামগশ্রীসত্যব্রতসামশ্রমিবিরচিতায়াং
"মন্ত্রসঞ্জীবনী"-নামমন্ত্রব্রাহ্মণব্যাখ্যায়াম্
দ্বিতীয়প্রপাঠকীয়ঃ পঞ্চমঃ খণ্ডঃ ॥ ৫

পালনকারী আদিত্যদেবতার প্রীতি-উদ্দেশে এই হবি সমর্পিত হইতেছে; ইহা সুন্দররূপে গৃহীত হউক ॥ ১৭

সংহারকারী আদিত্যদেবতার প্রীতি-উদ্দেশে এই হবি সমর্পিত হইতেছে; ইহা সুন্দররূপে গৃহীত হউক ॥ ১৮ ॥ ৫

সামবেদীয় মন্ত্রব্রাহ্মণের দ্বিতীয়প্রপাঠকীয় পঞ্চম খণ্ডের
সত্যব্রতসামশ্রমীর কৃত বঙ্গানুবাদ সমাপ্ত ॥ ৫

## ॥ अथ षष्ठः खण्डः ॥

वास्तोष्पते प्रतिजानीह्यस्मान्-
त्स्वावेशो अनमीवो भवा नः ।
यत्ते महे प्रति तन्नो जुषस्व
शन्नो भव द्विपदे शं चतुष्पदे ॥ १

अस्य निचृदभिधारिणी त्रिष्टुप् छन्दः, इन्द्रो देवता, वास्तुयागे
वसादिहोमे विनियोगः—गो० गृ० ४, ७, २२ ।

हे 'वास्तोष्पते' वास्तुभूमेरधिष्ठातिः ! देव ! त्वं 'अस्मान्' 'प्रतिजानीहि' सुफलार्थिन इत्यवगच्छेति भावः । किञ्च अयं वास्तुः 'नः' अस्माकं 'स्वावेशः' सुखप्रवेशः 'अनमीवः' स्वास्थ्यकरश्च यथा स्यात् तथा कृपावान् 'भव' । 'महे' महते 'ते' तुभ्यं 'यत्' किञ्चन हवनीयं 'प्रति' यच्छामीति शेषः ; 'नः' अस्माकं 'तत्' द्रव्य मवाप्य 'जुषस्व' प्रीत्या सेवस्व । ततश्च सदैव 'नः' अस्माकं 'द्विपदे' पुत्रादौ 'शं' कल्याणकरः, 'चतुष्पदे गवादौ 'च' 'शं' कल्याणकरः 'भव' ॥ १

হে গৃহপতে দেব ! তুমি আমাদিগকে ফলাকাঙ্ক্ষী বলিয়া অবগত হও। তোমার প্রসাদে এই বাস্তু আমাদিগের সুখ-প্রবেশক ও স্বাস্থ্যকর হউক। আমরা তোমাকে যাহাকিছু পূজা দিতেছি, তাহাই গ্রহণ করত প্রীতিপূর্ব্বক সেবন কর। আমাদিগের পুত্রকলত্রাদি এবং গো অশ্ব প্রভৃতি চতুষ্পদ প্রাণিগুলিকে কল্যাণে রাখ। [ এই মন্ত্রে স্বাস্থ্য প্রার্থিত হইল ] ॥ ১

इये राके सिनीवालि सिनीवालि पृथुष्टुके ।
सुभद्रे पथ्ये रेवति प्रया नो यश आ वह (स्वाहा) ॥२

[अनुष्टुप् छन्दः ; राका-सिनीवाल्यौ देवते ; भवणायप्रायणकर्मणोर्यशःकामनया प्रथमायसताञ्जलिहोमे विनियोगः—गो० गृ० ४,८,१ सू० ।

'सुभद्रे' अतिमङ्गलस्वरूपे ! 'पथ्ये' हिते ! 'रेवति' सम्पत्तिशालिनि ! 'इये' हे 'राके' पौर्णमासि देवि ! किञ्च हये 'सिनीवालि' चतुर्दशीयुक्ताऽमावास्ये ! पुनः, 'पृथुष्टुके' बहुस्तुते 'सिनीवालि' चतुर्दशीयुक्तेऽमावास्ये देवि ! 'पथा' सन्मार्गेण 'नः' अस्मान् 'यशः' 'आवह' प्रापय । प्रत्येकविवक्षयैकवचनम् ; सिनीवाल्या आदरातिशयद्योतनार्थञ्च द्विर्वचनम् । 'स्वाहा' यदाह यत्, तत् सुहुतं भवतु ॥ २

সৌভাগ্যদায়িনী, হিতকারিণী, সম্পত্তিশালিনী, হে পৌর্ণমাসি ও চতুর্দশীযুক্তা অমাবস্যা দেবি। তোমরা উভয়েই আমাদিগকে সৎপথে যশোলাভ করাও। প্রার্থনা সম্যক্ সম্পন্ন হউক [এ মন্ত্রে যশ প্রার্থিত হইল] ॥২

ये यन्ति प्राञ्चः पन्थानो य उ चोत्तरत आ ययुः ।
ये चेमे सर्वे पन्थानस्तेभिर्नो यश आ वह (स्वाहा) ॥३

भुरिगनुष्टुप् छन्दः ; राका-सिनीवाल्यौ देवते ; भवणायप्रायणकर्मणोर्यशःप्रचारकामनया द्वितीयायसताञ्जलिहोमे विनियोगः—गो० गृ० ४,८,२ सू० ।

'ये' 'पन्थानः' मार्गाः 'प्राञ्चः' पूर्वाभिमुखाः 'यन्ति' गच्छन्ति, 'ये' 'च' 'उत्तरतः' दिशः 'आययुः' आगताः, 'ये' 'च' 'इमे'

'अश्वत्याः 'सर्वे' 'पन्थानः', 'तेभिः' तैः पथिभिः हे राके ! अयि सिनीवालि ! युवां पृथक् पृथक् 'नः' अस्माकं 'यशः' 'आ,वह' प्रचारय । 'स्वाहा' आह यत्, तत् सुष्ठु भवतु ॥ ३

হে পৌর্ণমাসি দেবি ! এবং হে সিনীবালি দেবি ! যে সমস্ত পথ পশ্চাভিমুখ যাইতেছে, যে সমস্ত পথ উত্তরদিক্ হইতে আসিতেছে এবং যে সকল পথ এইস্থানেই রহিয়াছে ; এ সমুদয় পথেই আমাদিগের যশ বহন কর। প্রার্থনা সম্যক্ সম্পন্ন হউক [ এ মন্ত্রে দেশ-দেশান্তরে যশঃপ্রচার প্রার্থিত হইল ]॥ ৩

यथा यन्ति प्रपदो यथा मासा अहर्जरम् ।
एवं मा श्रीधातारः समवयन्तु सर्वतः (स्वाहा) ॥ ४

विराड्गायत्रीच्छन्दः, राका-सिनीवाल्यौ देवते; अवगाहनायणकर्मणी श्रीकामस्था तृतीयाज्जलाञ्जलिहोमे विनियोगः—मा० गृ० ४,८,३ ६० ।

'यथा' 'प्रपदः' प्रपदाः पादाग्रभागाः क्रमचालिताः सन्तः 'अहर्जरम्' देशं 'यन्ति' प्राप्नुवन्ति ; 'यथा' च 'मासाः' मार्गशीर्षादयः क्रमात् 'अहर्जरं' संवत्सरभावं 'यन्ति' प्राप्नुवन्ति ; 'एवं' एवमेव 'सर्वतः' सम्पूर्णतः 'श्रीधातारः' श्रियो विधातारः देवाः 'मा' मां 'सम् अव यन्तु' सम्यक् प्राप्नुवन्तु ; राज्ञां श्रियं ददतु इति भावः । 'स्वाहा' आह यत्, तत् सुष्ठु भवतु ॥ ४

পাদের অগ্রভাগসকল যেমন উত্তরোত্তর চালিত হইয়া গন্তব্যস্থান প্রাপ্ত হয়, অগ্রহায়ণাদি মাস সকল যেমন উত্তরোত্তর যাইয়া সংবৎসরতাকে প্রাপ্ত হইতেছে ; শ্রী-বিধাতা দেবতারাও এইরূপে সম্পূর্ণভাবে আমার উত্ত-

স্তোত্র শ্রীবৃদ্ধি করুন। প্রার্থনা সম্যক্ সম্পন্ন হউক [ এ মন্ত্রে ক্রমশঃ শ্রীবৃদ্ধি প্রার্থিত হইল ]॥৪॥

यथा समुद्रं स्रवन्ता:
समवयन्ति दिशो दिश: ।
एवं मा स्रवायो ब्रह्म-
चारिण: समवयन्तु दिशा दिश: स्वाहा ॥ ५

भुरिगुपरिष्टाद्बृहतीच्छन्द: ; राका-सिनीवाल्यौ देवते ; सवर्णायद्वापि गणकर्मणो ब्रह्मचारिकामनया चतुर्थाचतातिसिद्धौ विनियोग:—गो० गृ० ४,८,४ सू० ।

'यथा' 'स्रवन्ता:' स्रवन्त्य: नगशिखरादित: चरन्त्यो नद्य: 'दिश: दिश:' सर्वाभ्यो दिग्भ्य आगत्य 'समुद्रं' 'समवयन्ति' सम्यक् प्राप्नुवन्ति समुद्रे सम्मिलिता भवन्ति; 'एवं' तथैव 'ब्रह्म-चारिण:' वेदविद्यार्थिनश्छात्रा: 'दिश: दिश:' सर्वाभ्यो दिग्भ्य आगत्य 'स्रवाय:' बान्धवा: सन्त: 'मा' मां 'समवयन्तु' सम्यक् प्राप्नुवन्तु, आचार्यत्वेनाश्रयन्त्विति यावत्। 'स्वाहा' अस्य यत्, तत् सुहु भवतु ॥ ५

যেমন গিরিশিখরাদি হইতে পরিস্রুত নদীরা, সকল দিক্ হইতে আগমন করত সমুদ্রে সম্মিলিত হইয়া থাকে; সেইরূপ বেদবিদ্যার্থী ছাত্রগণও দিগ্‌দিক্ হইতে সমাগত হওত বন্ধুভাবে * আমাকে সঙ্গত হউন। প্রার্থনা সম্যক্ সম্পন্না হউক [ এ মন্ত্রে সুযোগ্য ছাত্র প্রার্থিত হইল ]॥৫

---

* ছাত্রভাব ও বন্ধুভাব প্রায় তুল্য কথা; যেহেতু 'গুরোর্দোষাবরণং ছত্রম্, তৎ শীলমস্য, স এব ছাত্রঃ'। এতদ্বারা যাবজ্জীবন গুরুর দোষাবরণাদি বন্ধুতা ছাত্রমাত্রেরই কর্ত্তব্য।

বসুবন এধি বসুবন এধি বসুবন এধি ॥ ৬

আসুরী গায়ত্রীচ্ছন্দঃ ; ইন্দ্রো দেবতা ; এধি জপে বিনিয়োগঃ—গোঁ গৃ০ ৪,৮, ৫ সূ০ ।

'বসুবনি' হে ধনাধিপ ! বসু ধনং বনতি ভজতে স বসুবনিঃ, তস্য সম্বোধনম্ । 'এধি' এহি ; ইহ গৃহে ইতি যাবৎ । বার-ত্রয়োক্তিরতিশয়ার্থা ॥ ৬

হে ধনাধিপ ! আমার গৃহে আগমন কর, হে ধনাধিপ ! আমার গৃহে আগমন কর, পুনশ্চ বলিতেছি—হে ধনাধিপ ! আমার গৃহে আগমন কর ॥ ৬

বশঙ্গমৌ দেবযানৌ যুবং স্থঃ
যথা যুবয়োঃ সর্ব্বাণি, ভূতানি বশ মায়ন্তি,
এবং মমাসৌ বশ মেতু ( স্বাহা ) ॥ ৭

পুরস্তাদ্বৃহতীচ্ছন্দঃ , চন্দ্রাদিত্যৌ দেবতে ; প্রসাদকামস্য যবহোমে বি০—গো০ ৪,৮,৬ ।

'দেবযানৌ' দেবানাং দ্যোতমানানাং গতিসাধনৌ হে চন্দ্রা-দিত্যৌ ! 'যুবং' যুবাং 'যথা' 'বশঙ্গমৌ' ঈশ্বরনিয়মাধীনৌ 'স্থঃ' ভবথঃ; 'সর্ব্বাণি ভূতানি' চ যথা 'যুবয়োঃ' 'বশম্' 'আয়ন্তি' আগচ্ছন্তি ; 'এবম্' তথৈব 'অসৌ' এতন্নামা জনঃ 'মম' 'বশম্' 'এতু' আগচ্ছতু । 'স্বাহা' আহু যৎ, তৎ সুহুতং ভবতু ॥ ৭

দেবযানস্বরূপ, হে চন্দ্র ও আদিত্য দেবদ্বয় ! তোমরা যেমন চিরদিন ঐশনিয়মের বশীভূত এবং এই দৃশ্যমান স্থাবর-জঙ্গম সমস্তই যেমন তোমাদের বশীভূত ; অমুক ব্যক্তিও সেইরূপ আমার বশীভূত হউন । প্রদত্ত এই হবি সম্যক্ গৃহীত হউক ॥ ৭

शङ्खश्चमैन आयुश्च, देवयानौ युवं स्थो
यथा युवयोः सर्व्वाणि, भूतानि वश मायन्ति,
एवं ममाऽसौ वश मेतु ( स्वाहा ) ॥ ८ ॥

पथ्यापङ्क्तिश्छन्दः ; चन्द्रादित्यौ देवते ; प्रसादकामस्य यवहोमे वि०—गो० गृ० ४,५,७।

'शङ्खः' निधिविशेषः 'च', 'मनश्चायुः' मनसा अन्तःकरणेन सहित मायुः चरकोक्तम् ( शरीरेन्द्रियसत्त्वात्मसंयोगो धारि, जीवितं वा ) 'च', 'युवं' युवाम् 'देवयानौ' 'स्थः' भवथः ; 'युवयोः' 'सर्व्वाणि भूतानि' स्थावरजङ्गमानि 'यथा' 'वशम्' 'आयन्ति' आगच्छन्ति ; 'एवं' तथैव, 'असौ' एतन्नामा जनः 'मम' 'वशम्' 'एतु' आगच्छतु । आहुत यत्, तत् सुहुत भवतु ॥ ८

শঙ্খ নামক নিধি ও মনের সহিত জীবন ; তোমরাও দেবগণের লভনীয় বস্তু ; এই দৃশ্যমান স্থাবরজঙ্গম সমস্তই যেরূপ তোমাদের বশে ( অর্থাৎ সংখ্যাপরিমুক্ত অর্থবাহের দ্বারা এবং অন্তঃকরণের সহিত জীবন পর্য্যন্ত ব্যয় করিতে সমুদ্যত হইলে সমস্তই বশীভূত ) হইয়াথাকে ; সেইরূপ অমুকব্যক্তি আমার বশে হউন । প্রদত্ত এই হবি সম্যক্ গৃহীত হউক ॥ ৮

आकूतीं देवीं मनसा प्रपद्ये
यज्ञस्य मातरꣳ सुहवा मे अस्तु ।
यस्यास्त एकमक्षरं परꣳ
सहस्रा अयुतं च शाखा-
स्तस्यै वाचे निहवे जुहोम्या
मा वैरो गच्छतु श्रीर्यशश्च ( स्वाहा ) ॥ ९

स्वराडतिजगतीच्छन्दः; वाग् देवता; सर्व्वकामस्य अक्षुपतहोमे वि०—गो० ४,८,८।

'यशस्य' सर्वस्यैव कर्म्मणः 'मातरं' प्रसवित्रीम् 'आकूतिं' वाक्शक्तिं 'देवीम्' अहं 'मनसा' अन्तःकरणेन सह 'प्रपद्ये' प्रपन्नोऽस्मि । 'मे' मम 'सुहवा' हवी रवः, तथाच सुरवा सुवाणी 'अस्तु' । 'यस्याः' वाकशक्तेः 'तं' तव 'एकम्' एकविधम् 'परम्' उत्कृष्टं स्वरूपम् 'अक्षरम्' मनुष्यैरुच्यमानं ककारादिकम् भवति, अथ 'सहस्रा' सहस्रम्, 'अयुतं' दशसहस्रं च स्वरूपाणि पश्वादिभिरुच्यमानानि सन्ति ; 'निहवे' आह्वाने, ज्ञानशक्तिरूपफललाभाय 'तस्यै' 'वाचे' 'जुहोमि', इदं हव्य मिति शेषः । ततश्च 'श्रीः' धनम्, 'यशः' कीर्त्तिः 'च', 'वरः' त्वत्प्रसादः 'मा' माम् 'आगच्छतु' । 'स्वाहा' आह यत्, तत् सुष्ठु भवतु ॥ ८

আমি মনের সহিত, সর্ব্বকার্য্যের জনয়িত্রী, আকূতি ( বাক্‌শক্তি ) দেবীর শরণাগত হইতেছি ;—আমার বাণী সুন্দর হউক। সে বাক্‌শক্তির উৎকৃষ্ট এক স্বরূপ, মনুষ্যের মুখ হইতে ক খ প্রভৃতি অক্ষররূপে প্রকাশ পাইয়া থাকে এবং অপর সহস্র সহস্র স্বরূপ, সতত পশ্বাদি কর্তৃক প্রকাশিত হইয়াথাকে, সেই প্রশস্ত বাক্‌শক্তি লাভের জন্য ধ্বনিস্বরূপা বাগ্দেবীকে এই আহুতি প্রদান করিতেছি। তাঁহার প্রসাদে আমি যেন যথেষ্ট ধন ও যশোলাভ করিতে পারি। প্রদত্ত এই হবি সম্যক্‌ গৃহীত হউক ॥ ৯

इद महमिमं विश्वकर्म्माणं

श्रीवत्स मभि जुहोमि ( स्वाहा ) ॥ १०

निचृद्‌द्विपाद्विराडगायत्रीच्छन्दः ; विश्वकर्म्मा देवता ; पद्महोमे विनियोगः—४,८,१२।

"इदं" पद्मद्रव्यजातं 'श्रीवत्स' श्रीवत्समणिरिव बहुमूल्यम् भवत्विति 'अहम्' 'इमं' ज्ञानेन्द्रियगम्यं सर्वत्र विद्यमानं

'विश्वकर्माणं' देवम् 'अभि' लक्ष्य 'जुहोमि' । 'स्वाहा' आह यत्, तत् सुष्ठु भवतु ॥ १०

আমার এই প্রাণসমূহ শতসংখ্যক মণির ন্যায় বহুমূল্য হউক।—এই প্রকারে আমি সর্বত্র বিদ্যমান, জ্ঞানচক্ষুতে দ্রষ্টব্য, বিশ্বকর্ম্মা দেবতার প্রীতি উদ্দেশে আহুতি প্রদান করিতেছি। প্রদত্ত এই হবি সম্যক্ গৃহীত হউক। ১০

पूर्णहोमं यशसे जुहोमि
योऽस्मै जुहोति वरमस्मै ददाति
वरं वृणे यशसा भामि लोके (स्वाहा) ॥ ११

स्वराड्विराडनुष्टुप् छन्दः ; अग्निर्देवता, यशस्कामस्य पूर्णहोमे वि०—गो० ७८,२१।

'पूर्णहोमम्' इमं 'यशसे' यशोलाभाय 'जुहोमि' ; 'यः' यजमानः 'अस्मै' अग्नये 'जुहोति', 'अस्मै' यजमानाय सः अग्निः 'वरं' प्रसादं 'ददाति' इति ध्रुवम् ; अतोऽहं 'वरं' 'वृणे' प्रार्थये।—यथाचाहं 'लोके' इह 'यशसा' युक्तः सन् 'भामि' भानि, दीप्येयेति । 'स्वाहा' आह यत्, तत् सुष्ठु भवतु ॥ ११

যশোলাভের নিমিত্ত এই পূর্ণাহুতি হবন করিতেছি ; যে ব্যক্তি অগ্নিতে পূর্ণাহুতি হবন করে, তাহাকে সেই অগ্নিদেব বর প্রদান করিয়াথাকেন, ইহা নিশ্চয় ! অতএব আমি বর প্রার্থনা করি—আমি যেন ইহলোকে যশের সহিত প্রকাশ পাই। প্রার্থনা সম্যক্ সম্পন্ন হউক। ১১

इन्द्राम वदात् तमो वः परस्तात् ।
अहं वो ज्योतिर्मा मुच्यत सर्वे (स्वाहा) ॥ १२

निचृत्ककुमती गायत्रीच्छन्दः; इन्द्रो देवता, सहायकामस्य पूर्णहोमे वि०—गो० ४,८,२२।

हे 'इन्द्र !' 'आम' आमः अपक्वः अपरिपक्वप्रज्ञो जनः 'वदात्' वदति । किमितुच्यते—" 'वः' स्वग्निप्रभृतीनां युष्माकं 'परस्तात्' पश्चात् 'तमः' अन्धकारो विद्यते "—इति ; 'अहं' तु ब्रवीमि —'ज्योतिः' सर्वत्रैवेति । एतादृशं प्रज्ञावन्तं 'माम्' 'तर्हि' यूयं देवाः 'अभ्येत' प्रीत्या उपगच्छत । 'स्वाहा' आह यत्, तत् सुष्ठु भवतु ॥ १२

হে ইন্দ্র (সূর্য) ! অপরিপক্ববুদ্ধি, ব্যক্তিই বলিয়াথাকে,—তোমাদের পৃষ্ঠ-ভাগে অন্ধকার ( যেমন দীপের ) ; কিন্তু আমি বলি তোমাদের সর্ব্বদিকেই প্রকাশ। তোমরা সকলেই আমার সহায় হও। প্রার্থনা সম্যক্ সম্পন্না হউক ॥ ১২

## अन्नं वा एकञ्छन्दस्यं मन्नं ह्येकं भूतेभ्यश्छदयति ( स्वाहा ) ॥ १३

निचृत्पिपीलिकमध्या गायत्रीच्छन्दः ; आदित्यो देवता ; पुरुषाधिपत्यकामस्य चतुष्पथीये प्रथमाज्याहुतौ विनियोगः—गो० गृ० ४,८,२ सू० ।

'अन्नं' व्रीह्यादिकं 'वै' एव 'एकं' प्रधानम् 'छन्दस्यम्' छादकं प्राणबन्धनम् ; 'हि' यतः 'एकम्' तदेव 'अन्नम्' 'भूतेभ्यः' भूतानां 'छदयति' बध्नाति ; प्राणानिति शेषः । दत्तं मेतद्धविः सुष्ठु गृहीतं भवतु ॥ १३

অন্নই প্রাণিদিগের প্রাণ-ধারণের অসাধারণ কারণ ; যেহেতু প্রাণিগণকে আশ্রয় করিয়া এক অন্নই প্রাণ সমস্তকে বন্ধন করিতেছে। প্রদত্ত এই হবি সুন্দর গৃহীত হউক ॥ ১৩

श्रीर्वा एषा यत्सत्वानो, विरोचनो
मयि सत्त्वं मवदधातु ( स्वाहा ) ॥ १४

भुरिक्पिपीलिकमध्या गायत्रीच्छन्दः ; आदित्यो देवता ; तत्रैव द्वितीयाज्यहोमे विनियोगः—गो० ग० ४, ९, २ सू० ।

'यत्' यस्मात् 'सत्त्वानः' सत्त्वाः प्राणिन एव, अत स्रष्टौ 'वै' निश्चयं 'एषा' दृश्यमाना 'श्रीः' शोभा ; अतः 'विरोचनः' दीप्तिमान् स देवः ईश्वरः, आदित्यो वा 'मयि' 'सत्त्वम्' प्राणिपोषणसामर्थ्यम् 'अवदधातु' स्थापयतु । 'स्वाहा' दत्त मेतद्धविः सुष्ठु गृहीतं भवतु ॥ १४

প্রাণিগণই যেহেতু এ সৃষ্টির শোভা অতএব ঈশ্বর অথবা আদিত্যদেব আমাতে প্রাণিপোষণ-সামর্থ্য প্রদান করুন। প্রদত্ত এই হবি সুন্দররূপে গৃহীত হউক ॥ ১৪

अन्नस्य घृत मेव रसस्तेजः
सम्पत्कामो जुहोमि ( स्वाहा ) ॥ १५

निचृद्वर्धमानी गायत्रीच्छन्दः; अग्निर्देवता; तत्रैव प्रत्यागतस्याज्यहोमे वि०—गो० ४,९,३।

'अन्नस्य' व्रीह्यादेः 'घृतम् एव' 'रसः' सारः, तच्च घृतं 'तेजः' स्वरूपम्; 'सम्पत्कामः' पुरुषोऽहं तत्तेजः 'जुहोमि' अग्नौ क्षिपामि । 'स्वाहा' दत्त मेतद्धविः सुष्ठु गृहीतं भवतु ॥ १५

অন্নের সার ভাগ ঘৃত, তেজঃ স্বরূপ হইতেছে, আমি সম্পত্তি কামনায় ঐ তেজোদ্রব্য অগ্নিতে হবন করিতেছি। প্রদত্ত এই হবি সুন্দররূপে গৃহীত হউক ॥ ১৫

क्षुधे (स्वाहा) ॥ १६

दैव्युष्णिक् छन्दः ; क्षुधा देवता ; सायं होमे विनियोगः—गो० गृ० १,९,११ ।

'क्षुधे' रात्रौ क्षुन्निवृत्तये भृत्यविच्छित्तिकामस्य जुह्वतो मे दत्त मेतद्धविः 'स्वाहा' सुष्ठु गृहीतं भवतु ॥ १६

আমি (রাত্রে) ক্ষুধা-জন্য কষ্ট নিবৃত্তির অভিলাষে অগ্নিতে হবন করিতেছি; ইহা সুন্দররূপে গৃহীত হউক ॥ ১৬

क्षुत्पिपासाभ्याᳬ स्वाहा ॥ १७

दैवी पङ्क्तिश्छन्दः ; क्षुत्पिपासे देवते ; प्रातर्होमे वि०—गो० गृ० ४,९,११ ।

'क्षुत्पिपासाभ्यां' अहनि क्षुत्पिपासानिवृत्तये भृत्यविच्छित्तिकामस्य जुह्वतो मे दत्त मेतद्धविः 'स्वाहा' सुष्ठु गृहीतं भवतु ॥ १७

আমি (দিবসে) ক্ষুৎপিপাসারূপ উভয়বিধ কষ্ট নিবৃত্তির অভিলাষে অগ্নিতে হবন করিতেছি; ইহা সুন্দররূপে গৃহীত হউক ॥ ১৭

मा भैषीर्न मरिष्यसि जरदष्टिर्भविष्यसि ।
रसं विषस्य नाविद मुग्रं फेन मिवास्यम् ॥ १८

निचृदनुष्टुप्छन्दः ; प्रजापतिर्देवता ; विषापमोदने विनियोगः—गो० गृ० ४,९,१९ ।

हे सर्पदष्ट ! 'मा भैषीः' मृत्युभयं मा कार्षीः, त्वं 'न मरिष्यसि'; 'जरदष्टिः' जराव्याप्ताङ्गो 'भविष्यसि' । यतः 'आस्यं'

দীপোদ্ব্যাপন 'বিষস্য' 'রসম্' বীর্যম্ 'ভয়' প্রাণসংহারকং 'ফেনম্' 'মৃত' 'ন অবিদম্' নোপালভে অপিতু সামান্য মিতি ভাবঃ ॥ ১৮ ॥

হে সর্প-দষ্ট! মৃত্যুর ভয় করিও না, তুমি মরিবে না; তুমি সমুদয় জরাবস্থা ব্যাপিয়া জীবিত থাকিবে। সর্পের আসাদিংসক এই বিষরস, মরণ-জনক ফেনের ন্যায় বুঝিতেছি না অর্থাৎ অকিঞ্চিৎকর ॥ ১৮

তুরগোপায় মা, নাথ গোপায় মা।
অশস্তিভ্যো অরাতিভ্যঃ স্বস্ত্যয়ন মসি ॥১৯॥ ৬

স্বরাট্ চতুষ্পাদ্গায়ত্রীচ্ছন্দঃ ; দণ্ডী দেবতা ; শয্যায়াং দণ্ডস্থাপনে বি০—গো০ ৪.৮.১৩।

হে 'তুর' বেগগামিন্ দণ্ড! 'মা' মাং 'গোপায়' রক্ষ। হে 'নাথ!' 'মা' মাং 'গোপায়' রক্ষ। কেভ্যঃ ?—'অশস্তিভ্যঃ' ক্রূরকর্মভ্যঃ, 'অরাতিভ্যঃ' শত্রুভ্যঃ। তুর! ত্বং 'স্বস্ত্যয়নং' শুভার্থং স্থাপ্যমানঃ 'অসি' ভবসি ॥ ১৯ ॥ ৬

ইতি সামগশ্রীসত্যব্রতসামশ্রমিবিরচিতায়াং
"মন্ত্রসঞ্জীবনী"-নামমন্ত্রব্রাহ্মণব্যাখ্যায়াম্
দ্বিতীয়প্রপাঠকীয়ঃ ষষ্ঠঃ খণ্ডঃ ॥ ৬

হে বেগগামিন্ দণ্ড! আমাকে রক্ষা কর, হে নাথ! আমাকে রক্ষা কর; ক্রূরকর্মা শত্রুদিগ হইতে আমাকে রক্ষা কর। হে দণ্ড! তুমি আমার কল্যাণার্থ এই শয্যাতে স্থাপিত হইতেছ ॥ ১৯ ॥ ৬

সামবেদীয় মন্ত্রব্রাহ্মণের দ্বিতীয়প্রপাঠকীয় ষষ্ঠ খণ্ডের
সত্যব্রত সামশ্রমীর কৃত বঙ্গানুবাদ সমাপ্ত ॥ ৬

॥ अथ सप्तमः खण्डः ॥

हतस्ते अत्रिणा क्रिमिर्हतस्ते जमदग्निना ।
गोतमेन तिनीकृतो ऽत्रैव त्वा क्रिमे ब्रह्मवद्य मस्त्वा ॥ १

उपरिष्टाद् बृहतीच्छन्दः ; अत्र्यादयो देवताः ; क्रिमिपातने वि०—गो०गृ०४,९,१४ ।

'अत्रिणा' ऋषिणा 'ते' तव पूर्व्वपुरुषः 'क्रिमिः' 'हतः' विनष्टः ; तेनैव पूर्वं क्रमिपातन मौषध मुद्भावित मिति भावः । 'जमदग्निना' ऋषिणापि 'हतः' विनष्टः ते पूर्ववंशीय एव ; तेनापि क्रमिपातन मौषध माविष्कृत मिति भावः । अपि 'गोतमेन' ऋषिणा च त्वत्पूर्ववंश्यः 'तिनीकृतः' तनूकृतः विनष्ट एव ; तेनापि क्रमिनाशन मौषधं प्रकाशित मिति भावः । रे 'अवद्य' कथनायोग्याधम ! 'क्रिमे !' 'अत्रैव' अस्मादेहे एव स्थितम्, 'त्वा' त्वाम्, अहं हन्मीति शेषः । नदेतत् 'ब्रह्मवद्यं' ब्रह्मोक्त मिति ॥ १

অত্রি ঋষিই সর্ব্বপ্রথমে ক্রিমিনাশন ঔষধ আবিষ্কার করেন, পরে জমদগ্নি ঋষি এবং তৎপরে গোতম ঋষি। কথনাযোগ্য অতি অধম, রে ক্রিমে! অদ্য আমি এই অঙ্গের মধ্যেই তোকে বিনাশ করিতেছি ; ইহা ব্রহ্মবাক্য ॥ ১

भरद्वाजस्य मन्त्रेण, सन्तिनोमि क्रिमे त्वा ।
क्रिमिꣳ ह वक्रतोदिनं, क्रिमिमान्त्रानुचारिणम् ।
क्रिमिं द्विशीर्ष मर्जुनं, द्विशीर्षꣳ ह चतुर्हनुम् ॥ २

निवृत् षट्पाज्जगतीच्छन्दः ; भरद्वाजो देवता ; क्रमिपातने वि०—गो० गृ० ४,९,१४ ।

हे 'क्रिमे'! 'त्वा' त्वां त्रिविधमेव 'भरद्वाजस्य मन्त्रेण' 'सम्भिनद्मि' नाशयामि । कीदृशं कीदृशं क्रमि मित्याह— 'क्रिमिं' ('ह' व्यर्थः) 'वक्रतोदिनं' वक्रतारसशोषणेन व्यथाकारिणम्; प्रशस्ताकार मिति भावः । 'क्रिमिम्' 'मान्त्रानुषारिणम्' क्षुद्रान्त्रमध्ये गुह्यद्वारे अनुचरणशीलम्; सूत्रखण्डाकार मिति भावः । 'क्रिमिं' 'द्विशीर्षं' अतएव 'चतुर्हनुम्', 'अर्जुनं' शुक्लवर्णम्; दीर्घाकार मिति भावः ॥ २

ভরদ্বাজ ঋষির মন্ত্রণা-প্রভাবে আবিষ্কৃত ঔষধের দ্বারা (ফিতার ন্যায়) কৃমি, অন্ত্রচারী কৃমি (ক্ষুদ্র সূত্রখণ্ডবৎ) এবং দ্বিশীর্ষ চতুর্হনু, শুক্ল দীর্ঘ কৃমি;—এই ত্রিবিধ কৃমিকেই সম্যক বিনষ্ট করিতেছি ॥ २

**हतः क्रिमीणां क्षुद्रको हता माता हतः पिता।**
**अथैषां भिन्नकः कुम्भो य एषां विषधानकः ॥ ३**

अनुष्टुप् छन्दः आशास्यमानो देवता ; क्रमिपातने वि० – गौ० सू० ४.४.१४ ।

'क्रिमीणां' मध्ये 'क्षुद्रकः' क्षुद्रकीटजातिः गुह्यद्वारवास्तव्यः 'हतः'; 'माता' जनयित्री क्रिमीणा मेव 'हता'; 'पिता' जनकश्च क्रिमीणा मेव 'हतः'। कथमित्याह—'विषधानकः' इन्द्रयुवः 'कुम्भः' निहत् च यथाक्रमेण प्रयुक्तो भवतेव 'एषां' क्रिमीणां 'भिन्नकः' भेदकः, नाशको देवकश्चेत्यत इति भावः ॥ ३

গুহ্যদ্বারবাসী ক্ষুদ্রক্ষুদ্র কীটস্বরূপ কৃমিজাতি ও তাহার মাতা, পিতা

কৃমুযুক্ত 'ইন্দ্রযব' নামক ঔষধ সেবনে অন্ত্রমধ্যেই বিনষ্ট হইয়া থাকে এবং 'তেউড়ি' নামক ঔষধ উহাদিগকে রেচন করাইয়া থাকে ॥ ৩

क्रिमिं मिन्द्रस्य बाहुभ्या मवाञ्चं पातयामसि ।
हताः क्रिमयः साशातिकाः सनीलमक्षिकाः ॥ ४ ॥ ৩

निचृदनुष्टुप् छन्दः ; इन्द्रो देवता ; क्रमिपातने विनियोगः—गो० गृ० ४,९,१४ ।

'साशातिकाः' अशातिकया सह वर्त्तमानाः, 'सनील-मक्षिकाः' नीलमक्षिकया सह वर्त्तमानाः, 'क्रिमयः' सर्व्वे 'हताः' इन्द्रयवौषधप्रयोगेण । तत्र नष्टं 'क्रिमिं' क्रमिकुलं 'इन्द्रस्य बाहुभ्यां' इन्द्रबाहुद्वयरूपेण त्रिवृन्नामौषधप्रभावेण 'अवाञ्चम्' अधोमुखं 'पातयामसि' पातयामः ॥ ४ ॥ ৩

इति सामगश्रीसत्यव्रतसामश्रमिविरचितायां
"मन्त्रसञ्जीवनी"-नाममन्त्रब्राह्मणव्याख्यायाम्
द्वितीयप्रपाठकीयः सप्तमः खण्डः ॥ ৩

আশাতিকা ও নীলমক্ষিকার সহিত বর্ত্তমান, ক্রিমিসমূহ ইন্দ্রযব ঔষধ-প্রভাবে বিনষ্ট হইয়াছে ; সেই বিনষ্ট ক্রিমিকুলকে ইন্দ্রের বাহুরূপ 'তেউড়ি' নামক ঔষধের প্রভাবে অধোমুখে পাতিত করিতেছি ॥ ৪ ॥ ৭

সামবেদীয় মন্ত্রব্রাহ্মণের দ্বিতীয়প্রপাঠকীয় সপ্তম খণ্ডের
সত্যব্রত সামশ্রমীর কৃত বঙ্গানুবাদ সমাপ্ত ॥ ৭

---

॥ अथ अष्टमः खण्डः ॥

अर्हणा पुत्रवाससा धेनुरभवद्यमे ।
सा नः पयस्वती दुहा उत्तरा मुत्तरां समाम् ॥१

निचृदनुष्टुप्छन्दः ; अर्हणीयो देवता ; धेनुवन्धने विनियोगः—गो० गृ० ४,१०,१६

'पुत्रवाससा' पुत्रो वत्सः, वासः वसन मिव यस्याः, सा, जीव-वत्सेति भावः ( यद्वा, पुत्र ! इति पृथक् पदम् । तथा चैव मर्थः—हे 'पुत्र' पुत्रवदादरणीय, आचार्याद्यन्यतम, अर्हणीय ! 'वाससा' 'वस्त्रेण' सह विद्यमाना, वस्त्रेणावृतेति यावत् ) इयं 'धेनुः' अचिरप्रसूता गौः, 'अर्हणा' अर्हासम्पादिनी, नव अर्हणाय पूजनाय उपस्थापिता 'यमे' सङ्गमने देवे, जन्मान्तरग्राहकदेव-कार्यविषये; जन्मान्तरपरिग्रहणायेति यावत् 'अभवत्' प्रसूतेति-शेषः । 'सा' इयं 'पयस्वती' दुग्धवती 'नः' अस्माकं गृहे 'उत्तराम् उत्तरां समाम्' उत्तर मुत्तरं संवत्सरम् अपि 'दुहा' दोहनीयैव । तदित्थं नेयं वत्सहीना, नापि रोगिणी जरद्गवी वेति सूचितम् ॥ गुणविष्णुस्त्विह 'पुत्रवाससा' इत्यस्य 'पुत्रानुगामिनी पुत्रानुबोधिनीति यावत्'—इत्यर्थं मुक्त्वा 'पुत्रवाससेति पुत्रवासं पुत्राश्रयं सीदति गच्छतीति सदधातोर्गत्यर्थात् अन्येभ्योऽपि दृश्यत इति डः टिलोपः' इत्याह । तन्नोढिकादमालम् ; तादृश-सूत्रादर्शनात् । अस्ति यत् ड-प्रकरणे "अन्येष्वपि दृश्यते"—इति सूत्रम्, तत्तु पाणिनिमते अनधातुमात्रविषयकम् ; भाष्य-मते यदिच प्रवर्त्तते धात्वन्तरेऽपि, परं न तत्राऽऽदिच्छा भवेन्नि-यामिकेति धेयम् । एवं 'यमे' इत्यत्र य इति मे इति च

म पदद्वयं प्रकल्प्य 'मे मम' किञ्च 'य इति या' इत्यर्थे, ङ्याप्ोः संज्ञाच्छन्दसोर्बहुलमिति यामब्दो ह्रस्वः'—इत्याहुः । तदपि प्रामादिकम् ; ङ्याप्ोरित्यस्य समासाश्रयत्वात् ; न ह्यत्रैकपदेऽस्ति कथ मपि समाससम्भवः । ततो 'दुहा'—इत्याकारान्तपदस्य भ्रान्तत्वेन व्याख्यान मपि तस्यातीव चित्र मितिदिक् ॥ यमः इन्द्र मध्यमो नैरुक्तः (१०,२,६,७) वैवस्वत इति सङ्गमनो जनाना मिति च संहिताप्रसिद्धः (ऋ० सं० ७,६१४,१); तथाच विवस्वद्रश्मिभिरुत्तमो देहाद्देहान्तरे कर्माधीनजीव-वाहको वायुविशेष इत्येव गम्यते । 'यमे' इत्यस्य यमदेवे इत्ये-वार्थः सायणसम्मतो गृह्यभाष्ये (७,६,१६,६,) तथैवोपलब्धेः ॥ १

পুত্রের ন্যায় আদরণীয় হে অর্হণীয়! * অচিরপ্রসূতা, নবৎসা, উত্তরোত্তরবর্ষেও দুগ্ধদানসমর্থা (বৎসহীনা, বৃদ্ধা বা রোগিণী নহে), এই গাভীটি তোমার পূজার জন্য, বস্ত্রের সহিত উপস্থাপিতা হইয়াছে; যমদেবতার কার্য্যক্ষেত্রে উপস্থিত হইবার জন্য অর্থাৎ জন্মান্তর পরিগ্রহণার্থ প্রস্তুতা হইয়াছে ॥ ১

इद मह मिमां पद्यां

विराज मन्नाद्यायाधितिष्ठामि ॥ २

प्रजापतिर्देवता ; यजुः ; पद्याख्यानं प्रविशतो जपे विनियोगः—गो० गृ० ४,१०,२ ।

'इमां' दृश्यमानां 'पद्यां' पद्भ्या मेव गमनयोग्यां पदवीम् अवलम्ब्य 'इदं' दृश्यमानं 'विराजं' (विराजशब्दोऽदन्तः) शोभमानं गृहम 'अधि' कृत्य 'तिष्ठामि' गमनानिवृत्तो भवामि । 'अहम्' अर्हणीयः । किमर्थ मित्याह—'अन्नाद्याय' अन्नादि-लाभायेति यावत् ॥ २

---

* আচার্য্য, ঋত্বিক্, রাজক, রাজা, বিবাহ্য এবং প্রিয় অতিথি । গো০ ৪,১০,৩ ।